# वर्णपरिवर्तन-रहस्य-निरूपणम्

'वर्णविज्ञानम्' इत्यस्य द्वितीयो भागः

डॉ० लडुकेश्वर शतपथी

VARNAPARIVARTANA-RAHASYA-NIRUPANAM

Dr. Ladukeshwar Satapathy

The book is a major contribution to Phonetics by a scholar who combines with it a deep knowledge of Linguistics as embodied in Vedic Phonetics called Śikṣā and Prātiśākhya, Ancient Sanskrit Grammar of Pāṇinian system, Nirukta, a treatise on the etymology by Yāska, and Tantric literature. The scholar deals with the topic of the change of words in the languages of Indo-European family through increase, decrease (वृद्धि-क्षय) and change of sounds. He develops some new idea out of the Eastern and the Western stock in hand accepting or rejecting some speculations on both the sides dispassionately and reconciles some seeming controversies between Grammar, Śikṣās and Tantras on the one hand, and the Modern Linguistics on the other. He has presented a multi-coloured diagram of the Sanskrit alphabet to show individual and group characters of sounds and different relations among their counterparts responsible for sound changes using mathematical rules and other devices and proving them through exemplification from 45 Eastern and Western languages. This diagram and his selection of sounds susceptible to increase and decrease as a category deserve special mention.



Dr. Ladukeshwar Satapathy

Prof. Dr. Ladukeswar Satapathy was born in Brundaban Chandrapur (Shasana) near Kavisuryanagar, Ganjam, Orissa. He is M A. (Sanskrit), Ph. D., D. Litt. (Linguistics), Sahityacharya, Vyakarana Shastri and Hindi Visharad. Starting with a humble post of Pandit in Sanskrit Schools (1944), he was a Lecturer in Sahitya, and eventually retired as a Sanskrit Professor in a P. G. Govt. College (1985), and a Vyakarana Professor in the Sanskrit University, Puri (1987). Presently he is Research Professor in B.L. Institute of Indology, Delhi. At various stages, he held posts of Director of Research Project, Shastrachudamani, Principal, Superintendent of Sanskrit Studies, Orissa, Co-ordinator of P.G. Teaching department, Chairman, All Orissa Sanskrit Mahamandala, Secretary to State Advisory Board of Sanskrit Education, to Orissa Sanskrit Council and to Orissa Sanskrit Parishad. He has been invited to several national and international conferences and international seminars. He has extensively lectured in the refresher courses, series of extension lectures and an All India Summer School on Linguistics, Grammar, Vedas, Tantra, Philosophy and Sanskrit and Prakrit literature. He has composed Sanskrit verses and songs including 'Rāmacarita-Kāvyam' which consists of many Bandhas alongwith the benedictory verse conveying 150 meanings. He is the author of four books of which संस्कृतवणानां स्वरूपं समुत्पत्तिश्च is taught in M. Phil. (Sanskrit) in Utkal University.

---


The book is available with Dr. L. Satapathy

Present address
Research Professor, B.L. Institute
of Indology, Alipur, Delhi-110036

Permanent address
Ghodabazar, Puri-752002
(Orissa)

Price : Rs. 150.00 $. 10.00

# वर्णपरिवर्तनरहस्यनिरूपणम्

('वर्णविज्ञानम्' इत्यस्य द्वितीयो भागः)

मगधविश्वविद्यालयानुमोदितः डी. लिट्. शोधसन्दर्भः

— प्रणेता —

**डॉ० लड्डुकेश्वरशतपथी**

एम्. ए., पी-एच्. ड़ी., ड़ी. लिट्,

साहित्याचार्यः, व्याकरणशास्त्री, हिन्दीसाहित्यविशारदः

शास्त्रचूडामणिः—पुरीश्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य,

सेवानिवृत्तः स्नातकोत्तरसंस्कृतप्रोफेसरः—सम्बलपुरगङ्गाधरमेहेरमहाविद्यालयस्य,

सेवानिवृत्तः स्नातकोत्तरव्याकरणप्रोफेसरः—पुरीश्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य

भूतपूर्वः— गवेषणाविभागनिदेशकः स्नातकोत्तरविभागसंयोजकश्च

पुरीश्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य

उत्कलसंस्कृतशिक्षाविभागस्य अधीक्षकः

प्राचार्यः—बलाङ्गिरविद्याभूषणसंस्कृतमहाविद्यालयस्य,

साहित्याध्यापकः—पुरीसदाशिवसंस्कृतमहाविद्यालयस्य,

निखिलोत्कलसंस्कृतमहामण्डलस्य सभापतिः

# VARṆAPARIVARTANARAHASYANIRŪPAṆAM

( Volume II of Varṇavijñānam )

*Published by :*

**SMT. B. P. SATAPATHY**

Ghodabazar, Puri (Orissa), Pin-752002

*First Edition :*

1000 Copies, 1992

*Printed at :*

**SRI NARAYAN PRESS, PURI**

# स्वीकृतिः

बलवदाधमर्ण्यं स्वीकरोमि पूज्यचरणानाम् एम.ए., पी.एच्.डी., इत्युपाधिभाजां मगधविश्वविद्यालयस्य संस्कृतविभागमुख्यानां प्रोफेसराणां श्रीमतां डाक्टर राय अश्विनीकुमारमहाभागानां सविधे यत्कर्तृकं मार्गदर्शनमेतच्छोधसन्दर्भलेखे मां सफलतया संयुयोज। अस्य सन्दर्भस्य परिवर्तनपरिवर्धने आतन्वानाः यादवपुरविश्वविद्यालयस्य संस्कृतप्रोफेसरा एम्.ए., डी.फिल्., वेदवेदान्तव्याकरणतीर्थाः श्रीमन्तः सीतानाथगोस्वामिमहोदया अपि मम चिरकृतज्ञतापात्राणि भवन्ति। दिवंगतान् संस्कृतप्रोफेसरान् डॉ० करुणाकरकरमहाभागान् श्रीगोलकबिहारिधलमहाभागांश्च साश्रु सास्मरीमि, येभ्यः सन्दर्भगवेषणायां मूल्यवन्त उपदेशा मया प्राप्ताः। ज्ञानचक्षुः-समुन्मीलयितारश्छात्रवात्सल्यमूर्तयः पण्डितश्रीगोविन्दपतिमहाभागाः दिवंगताश्च श्रीविश्वनाथाचार्यमहाभागाः अतिसीमया करुणया यस्य मूर्खत्वदोषं कयाचिन्मात्रयाऽपानुदंस्तेभ्यः सभक्ति प्रणामं विदधे।

धन्यवादान् पुरस्करोमि विश्वविद्यालयानुदानायोगाय यस्यार्थिकमनुदानमेतद्ग्रन्थप्रणयने सहायकमभूत्। विविधरङ्गकजटिलरेखाचित्रनिर्माणेऽपि प्राध्यापक डा० रघुनाथमिश्रमहाशयानां सहायताऽविस्मरणीया। इतरे च ज्येष्ठाः सहकर्मिणः सहधर्माणश्छात्राश्छात्रकल्पाश्च एतत्सन्दर्भरूपग्रहणे तत्तत्साहाय्यमारचयन्तो मदीयप्रणाम-करमर्दन-सस्नेहसम्भाषणाशीर्वादान् यथास्वं लब्धुमर्हन्तीति।

कृतज्ञो लेखकः

# वाक्-प्रशस्तिः

ॐ देवीं वाचमजनयन्त देवा—

स्तां विश्वरूपाः पशवो वदन्ति ।

सा नो मन्द्रेषमूर्जं दुहाना

धेनुर्वागस्मानुप सुष्टुतैतु ॥

—ऋक्संहिता (८।१००।११)

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

—भर्तृहरिः (वाक्यपदीयम् १।१)

चित्तमयोऽहङ्कारः प्रव्यक्ताहार्णसमरसाकारः ।
शिवशक्तिमिथुनपिण्डः कवलीकृतभुवनमण्डलो जयति ॥

—पूर्णानन्दः (कामकलाविलासतन्त्रम् - ७)

इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम् ।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

—वामनः (काव्यादर्शः ४)

सैवापि देशकालप्रकृतिप्रमुखैः पृथक् परिच्छिन्ना ।
याऽसेव भाति सा मे स्फुरतुतरां मानसे वाणी ॥

—लेखकः

# अधिकरण (विषय) सूची

अधिकरणम् — पृष्ठम्

**अधिकरणम्** **पृष्ठम्**

## तृतीयः परिच्छेदः—वर्णपरिवर्तने विविधाः प्रभावकाः



## चतुर्थः परिच्छेदः— शब्दनिर्गमः

## पञ्चमः परिच्छेदः— वर्णसंज्ञा

## परिशिष्टम्



—*—

## कोष्ठक-विवरणचित्र-चित्रकुण्डलीसूची

—०—

**उदाहृतभाषाः, संक्षेपाश्च**

अपभ्रंश—अप.

अवधी—अव.

अहमिया—अह.

आइरिश्—आइ.

आर्मिनिअन्—आर्मि.

आर्मोरिकन्—आर्मो.

इङ्ग्लिश्—इ.

इतालिअन्—इता.

उच्च जर्मनी—उ.ज.

उर्दू—उ.

ओडिआ—ओ.

केल्टिक्—के.

गुजराति—गु.

ग्रीक्—ग्री.

जर्मनी—ज.

जेन्द्—जे.

टयूटानिक्—ट्यू.

डाच्—डा.

दानिश्—दा.

नार्स—ना.

पालि

पैशाची प्राकृत—पै. प्रा.

पोलिश्—पो.

प्रास्सिअन्—प्रास्सि.

फ्रिजिअन्—फ्रि.

फ्रेंच—फ्रे

बेंगाली—बें

बोहेमिअन्—बो.

मराठी—म.

महाराष्ट्री प्राकृत—म.प्रा.

मागधी प्राकृत—मा. प्रा.

मैथिली — मै.

रासिअन् — रा.

लिथुआनिअन् — लि.

लैतिन् — लं.

वेलश् — वे.

वैदिक — वै.

व्रज — व्र.

शौरसेनी प्राकृत — शौ. प्रा.

साक्सन् — सा.

संबलपुरी ओडिआ—संब॰ ओ.

संस्कृत — सं.

स्कान्दिनेविअन् — स्का.

स्लावोनिक् — स्ला.

स्विडिश — स्वि.

हिन्दी — हि.

अत्र प्रा=प्राचीन (पूर्वं निवेशित-श्चेत् । यथा—प्रा.इ.=प्राचीन-इङ्ग्लिश् )। प्रा=प्राकृत (परं निवेशितश्चेत् । यथा—मा.प्रा, =मागधी प्राकृत) ।

—o—

## इतरे शब्दसंक्षेपाः

अधिकरण=विषय—अधि.=वि.

आञ्चलिक— आं.

ग्राम्य— ग्रा.

द्रष्टव्य— द्र.

परिच्छेद— प.

पादटीका — पा. टी.

पृष्ठ— पृ.

श्लोक — श्लो.

सूत्र — सू.

Chapter — Chap.

Page — P.

Section — Sect.

## विशिष्टचिह्नानि

ɔe (यथा – Mɔen = Man)
—संवृताग्रस्वरः

— (यथा—अ) — अनुदात्तः

ॐ (यथा— छन्दाॐसि)—
अनुस्वारस्य उच्चारणविशेषः

‿ (यथा—ऍ)— अर्धदीर्घः

ə(यथा hiə=here)-उदासीन-स्वरः केन्द्रस्वरो वा

⁀ (यथा k͡=क्य) तालव्य-गौणककण्ठ्यः

— (यथा ā=आ)— दीर्घः

>(यथा शाक>साग(हि.)
—निर्गतः

<(यथा-साग(हि.)<शाक —
निर्गमकः

३ (यथा-अ ३)— प्लुतः.

: (यथा-नक्तम् : night)—
समीकरणम्

। (यथा अ) — स्वरितः

## श्लोक-श्लोकांशसूची

# भूमिका

यथा यथा विज्ञानप्रभावेण देशकालव्यवधानं नातीव कार्यबाधकं सम्पद्यते, तथा तथा विप्रकीर्णो मानवसमाजः सन्निकृष्टतरीभवति। न हि तस्य गोष्ठ्यः पुरेव साम्प्रतं क्षुद्राः, अपि तु विशालविशालतरीभावमापन्नाः। इयमुन्नतिर्वैकल्पिकं मार्गद्वयमनुधावति। एकेन संहारः, अपरेण शान्तिमयं सहावस्थानम्। यदि संकीर्णबुद्धिग्रस्ता वयं परस्परं विवदेम, तर्हि स्वोद्भावितैर्मारणास्त्रैरस्माकं जातिर्निश्चिह्ना भवेत्। यदि तु मिलिताः श्रेयसे प्रयतेम, तर्हि अभ्युदयस्य दुरारोहं शिखरमारुह्य निरतिशयप्रमोदेन सुदीर्घकालं यावत् सकलविधक्षेमगरिष्ठायां महिष्ठायां वसुन्धरायां विहरेम। को नु खलु पन्था ग्रहीतव्यः? ननु द्वितीय एव।

एतदर्थं सर्वप्रथमं मानवसमाजे एकताबोधः प्रजागरयितव्यः। काश्चिन्महनीयाः प्राचीनपरम्पराः सन्ति, यासामनाकलनेन आत्मीयेष्वपि अनात्मीयबुद्धिः पदं करोति। तादृशी भ्रान्तिः सर्वथा निराकरणीया।

भाषाविज्ञानविषयकः संदर्भोऽयं तादृशोद्देश्यसिद्धये प्रयतते। भाषाः खलु भावगतैक्यबोधस्य प्रकृष्टसाधनानि। एकभाषाभाषिणो हि परस्परस्य सन्निकृष्टा भवन्ति, समभाषाभाषिणश्चात्मीयान् मन्यन्ते। भारतीया हिन्दी-ओडिआ-बेङ्गालीप्रभृतयो मातृभाषा एकस्याः संस्कृतभाषाया निर्गता इति यथा यथाऽस्माकं हृद्बोधो भविष्यति, तथा तथा तत्तन्मातृभाषाभाषिषु भारतीयेषु परकीयभावः अपसरिष्यति, तैः सह एकत्वस्य च भावना विवर्धिष्यते। न केवलं भारतीया आर्यभाषाः, अपि च ग्रीक्-लैतिन्-जर्मानी-रसिआन्-फ्रेञ्च्-इङ्ग्लिश् प्रभृतयो वैदेशिकभाषा अपि अस्मद्भाषावंश-परम्परायां वर्तन्त इति तथ्यं नैव ज्ञातं बहुभिः। भाषाविज्ञानम् इदमज्ञानमपसार्य वैदेशिकानामपि आत्मनीनतां परिचाययेत्, संकीर्णभावं च अपचाययेत्।

प्राचीनतरकालादेव भाषाविज्ञानं भारते वेद-ब्राह्मण-निरुक्त-शिक्षा-प्रातिशाख्य-व्याकरणेषु यत्र तत्रोपलभ्यते। यथा—

१. उत त्वः पश्यन् न ददर्श वाचमुत त्वः शृण्वन् न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥

—ऋक् संहिता (ऋ. सं.) (१०।७१।४)

केचिद् वाचं श्रुत्वा अर्थं न बुध्यन्ते। बुध्यमानेष्वपि सर्वेषां सम्यक् प्रतीतिर्न भवति। यथा जाया पतिं कामयमाना सुवस्त्रा सती तस्मै एव आत्मनः शरीरं प्रदर्शयति, तथा कस्यचित् भाग्यवतो जनस्य सविधे वाक् आत्मानं प्रकाशयति, न तु सर्वस्य – अयमर्थः प्रकाशितो मन्त्रेऽस्मिन्।

२. देवैरनुरुद्ध इन्द्रः शब्दानां प्रकृतिप्रत्ययविभाजनमकरोदिति तैत्तिरीय-संहिता (तै सं.) प्रकाशयति—

"वाग् वै पराच्यव्याकृताऽवदत्। ते देवा इन्द्रमब्रुवन् - इमां नो वाचं व्याकुरु' इति। सोऽब्रवीद् - 'वरं वृणै, मह्यं चैवैष वायवे च सह गृह्याते' इति। तस्मादैन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते इति। (६।४।७)

३. आप् धातोः अप् शब्दं व्युत्पाद्य वेदविहितम् अप्प्रणयनम् इत्थं समर्थयते शतपथब्राह्मणम्— "यद्वेवापः प्रणयति अद्भिर्वाऽइदꣳ सर्वमाप्तं तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति'। (१।१।१३)

४. अङ्गारेष्वङ्गिराः (संबभूव) इति निरुक्तम् (नैघण्टुकम् ३।३ १७) अङ्गारशब्दात् अङ्गिरःशब्दं व्युत्पाद्य अङ्गारादङ्गिरसामुत्पत्तिं प्राह।

५. श-ष-स-ह-र इत्येषां पूर्ववर्त्ती अनुस्वारः अलाबुवीणानिर्घोषेणोच्चार्यते इति पाणिनीयशिक्षा (पा. शि.)—

अलाबुवीणानिर्घोषो दन्तमूल्यः स्वराननु।
अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रोः शषसेषु च॥ (२३)

६. पदान्तस्थस्य स्पर्शवर्णस्य उच्चारणे जिह्वादिकरणं शिथिलीकर्त्तव्यमिति शुक्लयजुःप्रातिशाख्य (शु. य. प्रा.) स्य निर्देशः—

स्पर्शान्तस्य स्थानकरणविमोक्षः कर्त्तव्यः (१ । ६७) इति ।

७. (क) सुधी + उपास्यः > सुध्युपास्यः । अत्र इकारस्य यकारत्वं साधितं व्याकरणे 'इकोयणचि' (६ । १ । ७७) इत्यष्टाध्यायी (अष्टा.) सूत्रेण ।

(ख) शिरा > सिरा (म. प्रा.) । अत्र शस्य सो भवति 'शषोः सः' (२।४३) इति प्राकृतप्रकाश (प्रा. प्र.) सूत्रेण ।

एषु भाषाविज्ञानान्तर्भूतानि निरुक्त शिक्षा-व्याकरणानि षडङ्गानां वेदानां त्रीण्यङ्गानि । अत एव तानि बहुभिर्मनीषिभिः पुङ्खानुपुङ्खभावेन विवेचितानि । तत्र निरुक्ते यास्कः, शिक्षायां याज्ञवल्क्यः, व्याकरणे च पाणिनिरुल्लेख्यनामानो भवन्ति ।

एतद्ग्रन्थेषु भाषाविज्ञानविषयकचर्चासु विहितास्वपि केवलं भाषाविज्ञानं नैषां विषयः, किञ्चिदन्यदपि । किं च भाषाणां वर्गीकरणम्, तुलनात्मकं विश्लेषणम्, विविधभाषाशब्दतुलनया लुप्तशब्दानां पुनरुद्धारः - इत्यादिकं नैषु दृश्यते । अत्र पाश्चात्यविदुषां श्रमः श्लाघनीयः ।

अधुना द्विशतमेव वर्षाणामतीतानि, यदा पाश्चात्यमनीषिणो भाषाविज्ञानस्य नूतना दिश आश्रित्य स्वीयमभियानं प्रारेभिरे । यदा तेषां संस्कृतेन परिचयोऽभवत्, तदा ते स्व-स्व-भाषाभिः संस्कृतस्य साम्यमनुभूतवन्तः । संस्कृतं स्वदेशेन परिचितं कारितवत्सु Sir william Jones (क्रै. १७४६-१७९४) प्रमुखो भवति । तत्कालादारभ्य पाश्चात्यदेशेषु नूतनदिशा भाषाविज्ञानाध्ययनस्य प्रथमसूत्रपातोऽभवत् । संस्कृतज्ञानं विना भाषातुलनाध्यवसायो निष्फल इति क्रमशः पाश्चात्यपण्डितैरुपलब्धम् । इयमुपलब्धिः क्रैस्ताष्टादशशताब्द्या अन्तिमभागे जाता ।

जर्मनीविद्वांसः अस्मिन् क्षेत्रे सुमहान्तमालोकं पातितवन्तः । Grimm (क्रै. १७८५-१८६३)- भद्रस्य नाम तेषु सर्वप्रथममुल्लेखमर्हति । तत्कृतो नियमः Grimm- नियमः इति भाषाशास्त्रे प्रसिद्धः । Jesperson-

भद्रेण (१) अस्य नियमस्य अव्याप्तौ (२) प्रयुक्तस्य पारिभाषिकशब्दस्य विवक्षितार्थप्रकाशनासामर्थ्ये च प्रदर्शितेऽपि [1]यदयं भाषाशास्त्रे साहसिकः पदक्षेपः, नास्त्यत्र संदेह: । Grimm- नियमस्य कांश्चिद् व्यतिक्रमान् नियमबद्धान् कुर्वंस्तु Verner-Grassman- योर्नाम आयाति । तालव्यीभावनियमः, a-e-o-इति स्वरत्रयस्य मौलिकत्वाविष्कारः, आदिमभारोपीयभाषायाः कल्पनं निर्माणं च, तस्या अपि मातृस्थानीयभाषारूपेण कल्पिताया आदिमभारोहित्ताइत ( Primitive Indo-Hittite )भाषाया अन्वेषणम् इत्यादीनि निश्चितमेव पाश्चात्यविदुषामनवरतसाधनायाः फलम् । प्राच्यविद्वद्भिरस्पृष्टान् विषयानेतानुपस्थापयन्तः पाश्चात्यविद्वांस: शिक्षाव्याकरणादिविषयेऽपि किञ्चिदग्रसरा अभवन् । किन्तु तन्त्रे दर्शने च चर्चिता भाषाशास्त्रसंपृक्ता विषयाः सर्वथाऽस्पृष्टा एव तैः । अस्यां स्थितौ अस्मिन् सदर्भे तान् सम्मेल्य प्राच्यपाश्चात्योभयविचारान् यथाप्रयोजनं संयोज्य कचिच्च

---

१- For this Grimm would of course have deserved great credit because a comprehensive formula is more scientific than a rough statement of facts - if the formula had been correct, but unfortunately, it is not so. In the first place, it breaks down in the very first instance, for there is no media in High-German corresponding to Greek k (cf. Kardia, hairto herz etc.) and where it has g Gothic has also g in accordan e with rules unknown to Grimm and not explained till long afterwards (by Verner). But the worst thing is that the whole space of generalisation produces the impression of regularity and uniformity only through the highly unscientific use of the word 'aspirate', which is made to cover such phonetically disparate things as (1) Combination of stop with following h, (2) Combination of stop with following fricative, pf, ts written z, (3) voiceless fricative f, s in G 'das (4) voiced fricative v, $\theta$ written th, and (5) h. — Language, Its Nature, Development and Origin ( Sect 5, Chap. 2, P. 43)

स्वकीयोहापोहोत्पन्नैर्नवीनैर्विचारैः परिवर्ध्य विषयवस्तु यथामत्युपस्थापितम्। अत्र भाषाविज्ञानाङ्गभूतं वर्णविज्ञानं तत्रापि वर्णपरिवर्त्तनमित्येकांशमाधृत्य विरचितमिदं संदर्भपुष्पं सुरसरस्वत्यै समुपह्रियते।

भाषाया गतिस्थित्यनुध्यानेन समाकलितं यद् भाषाप्रवाहो नदीप्रवाहेण कियदंशेनैव समानः, न तु सर्वांशेन। यथा जलपूर्णाया नद्या गतिः प्रतिनिमेषमनुभूयते, न तथा भाषायाः। नद्या गतिः कदापि पश्चान्मुखी न भवति, भाषायास्तु गतिः वर्णमालागतवर्णक्रमदृष्ट्या कदाचिदग्रमुखी [यथा-गत > गद (शौ. प्रा.) इत्यत्र] कदाचिच्च पश्चान्मुखी भवति [यथा- राजा > राचा (पै. प्रा.) इत्यत्र]। क्वचिद् वृद्ध्यभिमुखी [यथा- द्वितीयः बिथ्य (जे.) इत्यत्र त-स्य वर्णांशवृद्ध्या थः] क्वचिच्च क्षयाभिमुखी [यथा- जगत् > जग (हि.) इत्यत्र]। अनया दृष्ट्या चक्रवद् भवति भाषाप्रवाहस्य गतिः। किंच भाषाप्रवाहस्य गतिस्थिती समुद्रस्य गतिस्थितिभ्यां सह तुलनामर्हतः। समुद्रजलानामिव प्रतिमुहूर्तं विविधस्थानेषु भाषाङ्गभूतानां वर्णानामग्रमुखी पश्चान्मुखी च गतिरव्याहते तिष्ठतः। यदि कश्चिद् विज्ञानवित् सहस्राब्दीप्राक्तनीं समुद्रस्य स्थितिं कस्माच्चिदाकलनात् (record) ज्ञातुं प्रभविष्यति, तदा समुद्रस्य अद्यतन्या स्थित्या संतुल्य उपलप्स्यते यत्— "कुत्रचित् समुद्रः कियद् दूरमग्रमागतः, कुत्रचिदन्यत्र वा यथावस्थं स्थितः। अग्रसरणे पश्चाद्गमने च विविधस्थानेषु मात्राभेदो वर्तते। इत्थं प्रतिमुहूर्तं जायमानया विविधगत्या समुद्रो विभिन्नां स्थितिं धारयति।" भाषाऽपि विकासह्रासाभ्यां विविधां स्थितिं संश्रयते। एषां विचाराणां पृष्ठभूमावाधारितोऽयं संदर्भः।

अत्र नूतनता तावदिमान् विषयानालिङ्गति :—

(१) लोपागमवर्णविकारेति प्रचलितनाम्नां त्रयाणां परिवर्तनप्रकाराणां सन्दर्भगतविषयदृष्ट्याऽव्यापकत्वात् क्षय-वृद्धि-विनिमयेति नामानि कृतानि।

(२) वर्णानां स्तरक्रमोऽभ्यूहितः।

(३) पूर्वांशस्य वृद्धिक्षयानुसारेण व्याकरणीयसंज्ञाः कृता इत्याकलितम्।

(४) परिवर्तनस्य प्रत्यक्षपरोक्षभावेन द्वैविध्यं सोदाहरणं प्रदर्शितम् ।

(५) परोक्षपरिवर्तनेऽपि सजातीयत्वं विजातीयत्वं चोदाहरणमुखेन साधितम् ।

(६) परिवर्तनं वर्णं वर्णांशं चाश्रयतीति प्रकल्प्योदाहरणैः समर्थितम् ।

(७) सर्वोऽपि स्वरस्तरः परिस्थितिदृष्ट्या ह्रासस्य, विकासस्य, अनुभयस्य वा विषय इति प्रतिपादितम् ।

(८) विविधभाषातुलनाया आधारेण परिवर्तनस्य गतौ, वेगे, परिवर्तन-विशेषाणां विविधभाषासु असमत्वे च स्वविचाराः प्रकटिताः ।

(९) आगमात्मकं प्रथमस्तरं लोपस्य च सन्निहितस्तरं प्रकल्प्य तद्धर्मका वर्णा निर्वाचिताः, माहेश्वरसूत्रेषु एते श्रेणीबद्धभावेन विन्यस्ता इति तेष्वेव केचन वर्णा अनुबन्धीकृता इति च रहस्यमुद्घाटितम्, अपरेषां च त्यागे हेतुरभ्यूहितः ।

(१०) नृ-मृ-स्वरकल्पनायां विप्रतिपत्तिः प्रदर्शिता ।

(११) वर्णानाम्, उच्चारणस्य श्रवणस्य च प्रकृतिः, वर्णस्य उच्चारयितुश्च विविधपारिपार्श्विकपरिस्थितिः, वर्णस्य स्थानविशेषेष्ववस्थितिः, वर्ण-परिवर्तनम्, सहचारिशब्दाः, सादृश्याभासाश्च वर्णपरिवर्तनं प्रभावय-न्तीति साङ्गोपाङ्गं सोहापोहं सोदाहरणं च विशदीकृतम् । एतदवसरे-ऽभिनिधानतत्त्वं विश्लेषितम्, संयुक्तवर्णेषु संयोगपिण्डस्फोटनयोर्विषय-विभागश्चाकलितः ।

(१२) बहुमुखं शब्दनिर्माणं परिसंख्याय शब्दनिर्गमकल्पनायामसौकर्याणि प्रदर्शितानि ।

(१३) वर्णमालाया वैज्ञानिकक्रमं प्रकल्प्य चित्रप्रदत्तायां वर्णमालायां तदितरासु च विविधवर्णमालासु तत्तदुद्देश्यप्रकाशनपूर्वकं वैज्ञानिकक्रमोल्लङ्घन-कारणविवेचनं विहितम् ।

(१४) बहुषु वर्णमालाक्रमेषु स्थितेष्वपि वर्णसंबन्धप्रदर्शने तेषामनुपयोगितां प्रदर्श्य श्रेणीसम्बन्धसूचिका वर्णसञ्ज्ञा स्वोद्भाविते चित्रेऽवस्थापिता, यया वर्णयुगलानां मध्ये स्थिता विविधसम्बन्धाः प्रतीयेरन् । एतदर्थं विविधरङ्गका एककयुग्मकरेखाः संयोजिताः । वर्णानां प्रकृति-

प्रकाशनार्थं विविधस्तरेषु तेषां गाणितिकपद्धत्या निवेशनं विहितम्, वर्णाश्च रेखा-बिन्दुमयाः, कृशस्थूला, विविधरङ्गाश्च कृताः। एतत्सर्वं वर्णानां विविधानि सामञ्जस्यानि प्रकाश्य विनिमयात्मकवर्णपरिवर्तननिरूपणे साहाय्यमाचरति। एतस्मिन्नवसरे अ-ह-योर्वैशिष्ट्यम्, ऋलृवर्णयोर्वैचित्र्यं च शंसितम्, तत्तद्वर्णपरिवर्तनविषये आप्तोक्तयश्च यथायोगमुद्धृताः। विषयस्य स्पष्टतायै त्रयोदश कोष्ठकानि, एका कुण्डली, एकं चित्रं च प्रस्तुतानि। माहेश्वरसूत्रगतवर्णानां लिपिरूपेण विशेषक्रमेण विन्यासेन ह-स्य सकलवर्ण-क्षेत्रेषु व्याप्तिप्रदर्शनार्थं माहेश्वरवर्णकुण्डली उद्भाविता।

स्वल्पादेव कालादुदितस्य भाषाविज्ञानस्य मार्गो बहुभिरनाक्रान्त-त्वाद् बन्धुर एव। किं च बहुकठिनविषयान् सामूहिकभावेनाधारीकृत्य विकसितमिदं स्वभावतः कठिनतरम्। नात्र साहित्यस्य रसः, न दर्शनस्य स्वच्छन्दचिन्तनविलासः, न हेतुशास्त्रस्य केवलयुक्तिसमाश्रयः, न वा विज्ञानस्य एकपदी पद्धतिः। नीरसमपि इदं चमत्करोति, उदाहरणवैचित्र्यमस्य स्वच्छन्दविहरणं विहन्ति, अपवादबाहुल्यं युक्तीः कुण्ठयति, विज्ञाननाम्ना समाख्यायमानमपि इदं दिग्भ्रमं सम्पाद्य लक्ष्यविच्युतं करोति, केवलमनुभूतिं युक्तिं च संयुज्य दृष्टान्तैः परीक्ष्य तदालोकेनैव विशृङ्खलः पन्थाः कथञ्चि-दतितर्तव्यः।

अस्य परिशीलनं शास्त्रीयं प्रायोगिकं च ज्ञानमपेक्षते। तत्रापि प्रायोगिकं ज्ञानमेवास्य मूलभित्तिः। विविधशास्त्रीयज्ञानं तु पुष्टिसाधकम्। प्रयोगक्षेत्राण्यपि सुमहान्ति, नानाविधानि च। यां पुनरवलम्ब्य सन्दर्भोऽयं दण्डायमानः, सा खलु भाषाविज्ञानस्य वर्णपरिवर्तनाह्वया उच्चतमा शाखा। अतः प्रतिमुहूर्तं पतनान्महाभीतिः।

वर्णेषु प्रत्येकं त्रिचतुरैर्वर्णैः प्रत्यक्षसम्बन्धशीलम्, नेतरैः। अपरैः कैश्चिच्च परोक्षसम्बन्धो वर्तत एव। प्रत्यक्षसम्बन्धोऽप्यनेकविधः। यथा एको-ऽपि जनः कैश्चित् पितृत्व-पुत्रत्व-भ्रातृव्यत्वादिभिर्ज्ञातिसम्बन्धवान् भवति, कैश्चिच्च व्यवहारवशादन्तरङ्गत्वं स्थापयति, तथा वर्णोऽपि समानोच्चारण-स्थानाभ्यन्तरप्रयत्नैर्वर्णैर्ज्ञातिसम्बन्धं घोषत्वाल्पप्राणत्वादिबाह्यप्रयत्नवशाच्च

केश्चिद्वर्णैरन्तरङ्गसम्बन्धं स्थापयतीति व्यपदेष्टुं शक्यम् । चित्रसाहाय्येन तादृशप्रत्यक्षपरोक्षसम्बन्धान् प्रदर्श्य उपलब्ध-भूतवर्तमानभारोपीयभाषा-शब्देषु तत्प्रभावजानि परिवर्तनानि प्रकाशितानि । उद्भविष्यन्तीषु भाषास्वपि जनिष्यमाणानि परिवर्तनानि तदाधारेण युक्त्या सेत्स्यन्ति । अनेन प्रकारेण भारोपीयभाषापरिवारे कालत्रये जायमानानां परिवर्तनानां साधारणीकरणमत्रोद्दिष्टम् ।

आधुनिकवर्णविज्ञाने गृहीतानि कानिचिदेव तथ्यान्यत्र स्वीकृतानि, न सर्वाणि । तेषु केषाञ्चिदग्रहणकारणानि यथास्थानं विवेचितानि । यथा-न्-म्-स्वरकल्पनम्, अपश्रुती(ablaut)नां विविधस्तरेषु आबन्धनमित्यादीनाम् । पूर्वसन्दर्भे निराकृतं मूर्धन्यवर्णानां संस्कृते विकास इति कल्पनं विद्वद्भिर्गृहीतम् । अन्यानि कानिचित् तृतीयभागे यथावसरं विवेचयिष्यन्ते । तत्र कश्चित् सारश्चेत्तर्हि सारग्रहणनिपुणा विद्वांसस्तं गृह्णीरन्निति सविनयमुपयाचे ।

भाषाशास्त्रे एतज्जातीयः प्रथमोऽयमुद्यमः । इदम्प्रथमत्वादत्र त्रुटिविच्युतयः सम्भाव्यन्त एव । तथापि भाषाविज्ञानस्य कृतिनश्छात्रा इममधीत्य अस्यां दिशि लेखनीं चालयन्तः क्रमशः पूर्णाङ्गतां संपादयिष्यन्तीति लेखकस्य दृढो विश्वासः ।

मदीय पी-एच्-डी-शोधसंदर्भस्य दिग्दर्शकाः एम्-ए- डी-फिल्- वेद-वेदान्त-व्याकरणतीर्थेतिनैकोपाधिभाजः यादवपुरविश्वविद्यालयस्य संस्कृत-विभागाचार्याः सीतानाथगोस्वामिमहाभागा महता परिश्रमेण अस्य सन्दर्भस्य विषयचयने, परिबृंहणे, परिमार्जने, क्रमविन्यासे च अत्युपादेयां मार्ग-प्रदर्शनधुरामुद्वहन्तो यमुपकारं विहितवन्तः, यावज्जीवमहं तस्य प्रत्युपकारं कर्तुमक्षमोऽस्मीति गभीरकृतज्ञताविज्ञापनपुरःसरमुपसंह्रियते संदर्भस्य भूमिकेयमिति ।

विनीतो लेखकः

**डॉ० लड्डुकेश्वरशतपथी (शर्मा)**

दिनम् कं. ३१ । ५ १९८६ सर्वकारीय सेवानिवृत्तः संस्कृत प्रोफेसरः

# वर्णपरिवर्त्तनरहस्यनिरूपणम्

## प्रथमः परिच्छेदः

### सन्दर्भस्य लक्ष्यं योजना च

#### १. सन्दर्भस्य लक्ष्यं मूलभित्तिश्च

भारोपीयभाषावर्गस्य तुलनात्मकमध्ययनं 'सेतम्' - 'केंतुम्' - भाषावर्गयोर्मूलभूतायाः कस्याश्चिद् भाषायाः कल्पनायां पर्यवसितं येन वैदिकभाषा भारोपीयभाषावर्गस्य मातृस्थानात् भगिनीस्थानं प्रच्याविता[१]। अस्मिन् विषये साम्प्रतिकसिद्धान्तस्य सूक्ष्मतमपरिशीलनं कदाचिदनुमोदित-पद्धत्यपेक्षया प्रशस्ततरपद्धतेः प्रयोजकं स्याद्, येन प्रचलत्सिद्धान्तः परिवर्त्तित इति सम्भावना मानसमधिरूढा। अस्याः सम्भावनायाः परीक्षणार्थं त्रयो भागाः (volumes) कल्पिताः।

---

१. (क) The old confused notions of linguistic relationship lived on for a brief time in the opinion that the European languages were derived from Sanskrit.

—Language (Chap. - 1, P. 3)

(ख) No one supposes any longer that the Sanskrit was the common source of Greek, Latin and Anglo-Saxon. This used to be said, but it has long been shown that Sanskrit is only a collateral branch of the same stem from which sprang Greek, Latin and Anglo-Saxon, and not only these, but all the Teutonic, all the Slavonic languages, may, the languages of Persia, and America also - India, What Can it Teach Us. ("वैदिक वाङ्मय का इतिहास"स्य ७० तम-पृष्ठे उद्धृतम्)।

तत्र प्रथमो भागः 'संस्कृतवर्णानां स्वरूपं समुत्पत्तिश्च' (सं. स्व. स.) इत्याख्यमुद्रितशोधसन्दर्भरूपेण रूपायितः । अनेन सन्दर्भेण यादवपुर-विश्वविद्यालयात् पी. एच्. डी. इत्युपाधिर्लब्धः । अत्र न केवलं ध्वनिविज्ञान-विषयकाः प्राच्यपाश्चात्यविचाराः समाहृत्य तुलिताः, अपि च वर्णानां नित्यत्वानित्यत्वविषये श्रोत्रग्रहणप्रक्रियादिविषये च दर्शनविज्ञानमतान्युप-स्थापितानि । परममूलनिरूपणप्रसङ्गे मूलाधारचक्रतः प्रेर्यमाणवायुना परादिवाचां विविधस्तरोन्मेषाश्च प्रपञ्चिताः । वर्णोच्चारणार्थं क्रियमाणैः सङ्कलितैरष्टादशभिः बाह्यप्रयत्नैः दशभिराभ्यन्तरप्रयत्नैश्च चतुर्दशसु उच्चा-रणस्थानेषु त्रिविधैः करणैर्जायमाना वर्णभेदाः, तेषु मात्राभेदाः, उदात्तादि-स्वराश्च वायोरेव विविधगुणकर्मजनिता इत्यभ्यूह्य विशदीकृतम् । अन्ते च अनुस्वार-विसर्ग-जिह्वामूलीयोपध्मानीय-ꣳ-ꣴ-ह-नासिक्य-यम-स्वरभक्ति-रङ्गाणां भेदोपभेदान् व्याख्याय विविधसंस्कृतवर्णमालाः प्रदर्शिताः । एतद्-विषयकाः सूक्ष्मतमा वैदिकशास्त्र-तन्त्रशास्त्र-विचारा अप्यत्र क्रोडीकृताः ।

इममेव सन्दर्भं मूलभित्तीकृत्य सम्प्रति प्रस्तूयमानः "वर्णपरिवर्त्तन-रहस्यनिरूपणम्" इत्याख्यः शोधसन्दर्भो द्वितीयविभागस्य विषयो भवति । अत्र संस्कृतवर्णानां परिवर्त्तनपद्धतिः विज्ञानदिशा विवेचयितुमिष्यते । एतदर्थं वर्णसामञ्जस्यनिरूपणे कर्त्तव्ये तदर्थं कोऽपि प्रचलद्वर्णमालाक्रमो नोपयुज्यते इति स्वयमेकं चित्रमुत्प्रेक्ष्य तत्र सर्वेषां वर्णानां यथायथं सन्निवेशो विधीयते । प्रचलद्वर्णमालाक्रमाणामनुपयोगिता सदृष्टान्तमधुना विविच्यते ।

राम-लक्ष्मण-सीता इति क्रमेणोक्तौ रामस्य अनन्तरोच्चारितेन लक्ष्मणेन सह वस्तुतो वर्त्तमानं तादृशमन्तरङ्गत्वं प्रकाशते, लक्ष्मणस्य अनन्तरोच्चरितया सीतया सह वस्तुतः अवर्त्तमानमपि तादृशमन्तरङ्गत्वं प्रकाशते । प्रकृते तु लक्ष्मणस्य सीतया सम्बन्धः राममाध्यमेनैव, न तु साक्षात् । सीता हि लक्ष्मणस्य अन्तरङ्गभ्रातुः रामस्य अन्तरङ्गा पत्नी । यदि राम——लक्ष्मण इति रूपेण रेखाचित्रे त्रयाणां स्थापनं स्यात्, तर्हि
सीता

रेखासंयोगः रामस्य एकस्यां दिशि लक्ष्मणेन सम्बन्धम्, अन्यस्यां दिशि च सीतया सम्बन्धं साधु प्रकाशयेत्। रामलक्ष्मणौ एकया रेखया संयुक्तौ रामसीते चान्यया रेखयेति तयोर्द्विविधः (भ्रात्रोरेकविधः, पतिपत्न्योश्चान्यविधः) अन्तरङ्गसम्बन्धः प्रकाशेत। रेखासंयोगाभावश्च लक्ष्मणस्य सीतया साक्षात्सम्बन्धभ्रमं निवारयेत्। तथैव वर्णमालाक्रमे 'क-ख-ग' इति क्रमोऽस्ति, यो वर्णसन्निवेशदृष्ट्या विविधसामञ्जस्यासामञ्जस्यप्रदर्शने नैव क्षमः। तथाहि खः पूर्ववर्तिना ककारेण स्वसामञ्जस्यं यथा प्रकाशयति, तथा परवर्त्तिना गकारेणापि। ककारोऽल्पप्राणः, खकारस्तु महाप्राणः - इति अनयोरेकमेव वैषम्यम्; परन्तु घोषत्वेन[२], स्पृष्टत्वेन, कण्ठ्यत्वेन चेति बहुधा साम्यमिति तयोः सामञ्जस्यप्रदर्शनं समुचितमेव वर्त्तते। ख-ग योर्न तथा सामञ्जस्यमस्ति। गकारो हि अल्पप्राणत्वेन, अघोषत्वेन चेति अनेकधा खकारात् भिन्नः। तेन तयोः सामञ्जस्यबोधनमनुचितमेव। एवं खकारेण व्यवधानात् क-ग-योर्मध्ये वर्त्तमानमपि सामञ्जस्यं नैव प्रकाशते। ककारो हि अघोषप्रयत्नेनोच्चार्यते, गकारस्तु घोषप्रयत्नेन। तयोर्मध्ये एक एव भेदोऽस्तीति सामञ्जस्यप्रदर्शनमुचितमपि खकारेण व्यवधानात् व्याहतम्। चित्रे तु क $<^{ग}_{ख}$ इति रूपेणैषां स्थितिर्यथोचितं सम्बन्धं प्रतिपादयति। क-ख-योरेकविधम् (अघोषत्वरूपम्) क-ग-योश्चान्यविधम् (अल्पप्राणत्वरूपम्) सामञ्जस्यमत्र द्विविधरेखया प्रकाशते; रेखासंयोगाभावेन च ख-ग-योरसामञ्जस्यमाख्यायते। तेन ख-ग-योः परस्परपरिवर्त्तनस्योदाहरणं नास्ति, क-ग-योश्चास्ति, इति प्रकाशते। प्राङ्क्षष्ठः > प्राङ्ख्षष्ठः इत्यत्र ककारस्थाने खकारो जायते, वाक् + ईशः > वागीशः इत्यत्र च ककारस्थाने गकारः। एतत्परिवर्त्तनस्य मूलं क-ख-योः क-ग-योश्च सामञ्जस्यमेव, यत् खलु चित्रे सङ्केतितम्। अस्य सामञ्जस्यस्य हेतुस्तावद् उच्चारणस्थानाभ्यन्तरबाह्यप्रयत्नानामधिकांशेन साम्यं यदधिकृत्य विशदविवेचनं सं. स्व. स. सन्दर्भे विहितम्।

---

२. यत्राघोषस्तत्रैव विवार श्वासाविति एकजातीयत्वान्न तौ पृथक् गणितौ। अस्मादेव हेतोः घोषस्थले संवारनादौ न पृथक् प्रदर्शितौ।

Grimm- नियमे कतिपयप्रतीच्यभाषासु क-त-पा-नां ख-थ-फ-रूपेण, तेषां च ग-द-ब-रूपेण परिवर्त्तनयोग्यता प्रकाशिता[१], रेखाचित्रे तु भारोपीयपरिवारगतानां प्राच्यप्रतीच्यभाषासु व्यवहृतानां सर्वेषामेव वर्णानां परिवर्त्तनयोग्यता दिदर्शयिषिता।

किं च Grimm-नियमे प्रदर्शितानि प्रथमपरिवर्त्तनानि एकस्मिन् (इतिहासानाकलिते) काले घटितानि, द्वितीयपरिवर्त्तनानि चान्यस्मिन् (ऋैस्तसप्तमशतके) काले। अतस्तानि कालविशेषावच्छिन्नानि। अत्र प्रदर्श्यमानानि परिवर्त्तनानि सं. स्व. स.-सन्दर्भप्रदर्शितसामञ्जस्यानुसरणात् भूतवर्त्तमानकालयोर्जायन्त इत्युदाहरणैः प्रतिपादितानि। तानि च युक्त्या भविष्यत्यपि काले संघटिष्यन्त इति कालविशेषानवच्छिन्नानि भवन्ति। एतत् सर्वं Grimm-नियमादस्य वैशिष्ट्यमापादयति।

पाणिनिस्तमनुसरन्तोऽन्ये वैयाकरणाश्च तात्कालिक्याः संस्कृत-भाषाया एव विभिन्नपरिस्थितौ जायमानानि वर्णपरिवर्तनानि अन्वशासिषुः। अत्र तु कालविशेषः परिस्थितिविशेषश्च नापेक्ष्यते इति तेभ्योऽस्य भेदः।

---

१- Grimmm's formula looks thus :

| | | | |
|---|---|---|---|
| Greek | p. b. f. | t. d. th. | k. g. ch. |
| Gothic | f. p. b. | th. t. d | h. – g. |
| High G. | b.(v) f. p. | d. z. t. | g. ch. k. |

which may be expressed generally thus, that tenuis (t) becomes aspirate (a) and then media (m), etc., or tabulated

| | |
|---|---|
| Greek | t. m. a. |
| Gothic | a. t. m. |
| High G. | m. a. t. |

--Language (Chap. 2, Sect. 5, P. 46)

किं च ते ग्रन्था व्याकरणानि भवन्ति, अयं संदर्भस्तु भाषाविज्ञानं भवति, इत्यपि भेदः। व्याकरणे तु लघूपायेन शब्दसाधनमेवोद्दिष्टम्, भाषाविज्ञाने पुनः शब्दार्थवाक्यप्रयोगनिरूपणम्।

विशालं भारोपीयभाषावर्गं क्षेत्ररूपेण गृहीत्वा प्रवृत्तत्वात् संदर्भोऽयं परिवर्तनस्य साधारणनियमानेव प्रतिपादनस्य लक्ष्यीकरोति, न तु तत्तद्भाषाविशेषनियमान्। तेन श्रूयते : सुग्गइ (म. प्रा.), शुघुछि (ओ.) इत्यत्र ग-स्य ग-घ-रूपेण परिवर्तनं नैव विषयीकरोत्ययं संदर्भः। एवम् guardian : warden इत्यत्र केन्द्रोय-फ्रेञ्च्-भाषाया मौलिक ग-वर्णः कथं जर्मानिक्-केल्टिक्-भाषयोः व-रूपेण परिणतीभूय इङ्ग्लिश्-भाषायां द्विविधमिदं रूपं रक्षतीति विचार एतत्संदर्भक्षेत्राद् बहिर्भूतः।

अत्र कल्पिता वर्णसञ्ज्ञा मुख्यतया वर्णविकाराख्यपरिवर्तनस्य प्रतिपादिका, गौणतया च वर्णश्रेणीसञ्ज्ञायाः। विषयान्तराणि चानुषङ्गिकतयोपात्तानि इदमेव लक्ष्यं परिपोषयितुमग्रसरीभवन्ति।

यस्य वर्णस्य येन सामञ्जस्यं तौ परस्परं परिवर्तनमर्हतः। तेन गतः > गदो (शौ. प्रा.) इत्यत्र यथा तकारो दकारत्वमापद्यते, तथा गोविन्दः > गोपिन्तो (पै. प्रा.) इत्यत्र दकारस्तकारत्वमापद्यते। वर्णमालाक्रमे तकाराग्रे दकारस्य स्थितत्वात्तकारस्य दकाररूपेण परिवर्तनमग्रमुखं भवति, दकारस्य च तकाररूपेण परिवर्तनं पश्चान्मुखं भवति। एवमग्रमुख्या गत्या परिवर्तनेऽत्र सन्दर्भे आरोह इति व्यपदेशो विहितः, पश्चान्मुखगत्या परिवर्तने चावरोह इति। इत्थं लोपागमावपि अनुपदोक्ताग्रमुखपश्चान्मुखपरिवर्तने इव एकस्यैव वस्तुनो द्वे विपरीते तत्त्वे। तेन सम्+कृतम् > संस्कृतम् इत्यत्र यथा सकारागमो भवति, तथा भोस्+गच्छ > भो गच्छ इत्यत्र सकारलोपो भवतीत्यपि संदर्भस्यास्य प्रतिपादनविषयः।

द्वितीयभागे विविच्यमाना विषया वर्णपरिवर्तनस्य विविधं क्षेत्रं विविधां च पद्धतिं प्रथमभागाधारेण प्रकाशयन्तस्तृतीयभागे उपादीयमानानां विषयाणां मूलभित्तीभवेयुः। मूलभाषातो भाषान्तरनिर्गमे यां पद्धतिमव-

लम्ब्य संस्कृत (वैदिक)—भाषाया ग्रीक्-लैतिन् भाषादीनामुद्भवो निराकृतः, आदिमा काचिच्च भाषा कल्पिता, तया सार्कं पद्धत्यन्तरस्यापि ग्रहणेन कदाचिद् विपरीता चिन्ताधारा समुदिता सती संस्कृतस्य तद्भाषावर्ग-मातृत्वमादिमभाषान्तरस्य कल्पनाया अनावश्यकतां च पक्षान्तररूपेण साधयेत्। तथाहि हंसशब्दात् goose शब्दनिर्गमे असौकर्यमालक्ष्य *घेन्स् इति तयोः शब्दयोर्मूलरूपमादिमभारोपीयभाषायां प्रकल्प्य तस्मादेकस्यां दिशि घ-स्य गकारांशलोपे हंस इति, अपरस्यां दिशि च हकारांशलोपे goose इति भवतीत्यादिको विचारः प्रकाशित आधुनिकभाषातत्त्व-समीक्षकैः। हंसशब्दात् goose इत्यस्योत्पत्तिपक्षे ह-स्य ग-रूपेण परिवर्त-नमसङ्गतमिति तेषां विचार आपाततः शोभन एव।

परन्तु प्रश्नोऽयमन्यथाऽपि समाधातुं शक्यते। महत्या प्राणशक्त्या हकारोच्चारणार्थं प्रयासे क्रियमाणे क्वचित्तत्पूर्वं वर्णांशागमे घंस इति जाते पश्चाच्चोच्चारणशैथिल्यात् हकारांशस्य लोपे goose इति स्यात्। ह-स्थाने अष्टाध्यायीप्रतिपादितो घः[४] अत्र गकारागमं सङ्केतयति। किं च ह-घ-ग इति परिणामस्य बहून्युदाहरणानि सन्ति। यथा— स्निह् + त > स्निग्ध, दुह् + तृ > दोग्धृ, उष्णिह् > उष्णिग्, दह् + ताम् (<तस्) > अदग्धाम् (लुङ्)।

ह-स्य न केवलं कण्ठ्यवर्ग्यचतुर्थस्य घ-स्य माध्यमेन तद्वर्गतृतीयो गकारो भवति, अपि च तालव्य-मूर्धन्य-दन्त्यानां झ-ढ-धानां माध्यमेन ज-ड-द-त्वमपि।

ह-स्य ज-त्वं यथा— हस् हस् अ (असि.) > झस् हस् अ (असि.) > जहास। एवं जघान, जहार, जिघाय, जुहाव इत्यादि। तथा बाहुबन्ध > बाजुबन्ध (ओ.) इति।

ह-स्य ड-त्वं यथा— लिह् > लिड्भ्याम्, द्रुह् > ध्रुड्, विश्ववाह् > विश्ववाड्भ्याम्, तृह् > अतृणेड् इत्यादि।

४. हो हन्तेर्ञ्णिन्नेषु, अभ्यासाच्च, दादेर्धातोर्घः - अष्टा. (७ । ३ । ५४, ७ । ३ । ५५, ८ । २ । ३२)

ह-स्य द-त्वं यथा—अनडुह् > अनडुद्भ्याम्, नह् + त > नद्ध इत्यादि।
ह-स्थाने भोऽपि भवति, यद्यपि पुनः परिवर्तनेन बत्वं न दृश्यते। यथा—
हृ (वै.) > जभार (वै.), ग्रह् (वै.) > गृभाय (वै.)।

यदि एतेषु सर्वेषु ह-स्थाने तत्तदावश्यकतानुसारेण घ-ध-भानां[५] स्थितिमूलभाषायां कल्प्यते, तर्हि गौरवं स्यात्। किं च ध्रुग्-ध्रुड्, मुग्ध-मूढ, इत्यादिरूपयुग्माणि वीक्ष्य प्राचीनतमभाषायां ध्रु-घ्-ध्रु-ध्, मुघ्-मुध, इत्यादिरूपद्वयानां कल्पनामृते गत्यन्तरं न स्यात्। अथवा ईदृश्या अन्यस्याः क्लिष्टकल्पनाया आवश्यकता स्यात्। आगमलोपसंभावनाश्रयेण हंसशब्दाद् goose शब्दो निर्गतः स्यादिति संभावनाऽपि कर्तुं शक्यते। पाश्चात्य-संभावनायां कल्पित*घेन्स्-शब्दात् ग-लोपेन हंस इति, ह-लोपेन च goose इति साधनपद्धतिर्यथा भाषाविज्ञानेनानुमोद्यते, तथैव गकारागम-हकार-लोपाभ्यां goose शब्दसाधनपद्धतिरपि। आधुनिकसंभावनायां कल्पनात्रयं स्वीक्रियते। यथा—

(१) *घेन्स् इति अश्रुतादृष्टपूर्वस्य शब्दस्य स्थापनम्।
(२) हंसशब्दे गकारांशलोपः।
(३) goose शब्दे च हकारांशलोपः—इति।

प्राचीनसंभावनायां तु केवलं हंसशब्दे आगमलोपयोः कल्पनं भवति, न तु शब्दद्वये, नूतनशब्दस्थापनं च नावश्यकं भवति। तेनाधुनिक-संभावनापेक्षया प्राचीनसंभावना लघ्वीति आपाततोऽपि ज्ञायते। किं च *घेन्सशब्दात् anser (लै.)शब्दोत्पत्तिर्दुर्घटैव भवति, या हिन्द (जे.) : Indus, hable (प्रा. फ्रे.) : able, hit (प्रा. इं.) > it, hlinian (प्रा. इं.) > lean, नहीं (हि.) : नाइँ (ओ) इत्यादिवत् हंसशब्दात् ह-लोपेन सुघटा।

---

५. चवर्गः कवर्गस्य विकासः, तवर्गस्य च टवर्गः इति पाश्चात्यानां कल्पना-मनुसृत्य झ-ढौ परित्यक्तौ।

विविधयुक्तिभिरुदाहरणैश्च एवंविधानां संभावनानां पुष्टीकरणमेव तृतीयभागस्य लक्ष्यं यस्याधारभूतो भवति साम्प्रतिकः शोधसंदर्भः। एते त्रयो भागास्त्रिभिर्नामभिः प्रकाश्यन्ते, येषां सामूहिकं नाम भवति 'वर्ण-विज्ञान'मिति।

## २. संदर्भस्य योजना

'संस्कृतवर्णानां स्वरूपं समुत्पत्तिश्च' इत्याख्ये पूर्वसन्दर्भे उच्चारणस्थान-करणप्रयत्नविषयेषु विहितं विचारमवलम्ब्य वर्णानां मध्ये वर्तमानं सामञ्जस्यं प्रदर्शयितुं तन्मूलकांश्च वर्णविकाराख्यपरिवर्तनस्य प्रकारान् प्रकाशयितुमेष सन्दर्भो निबध्यते। तदर्थं कल्प्यमानायां वर्णसञ्ज्ञायां वर्णानामेकेन विशेष-क्रमेणावस्थितिः संपाद्यते। तादृशक्रमसन्निवेशस्यौचित्यं युक्त्या उदाहरणैश्च प्रतिपादयितुमुद्यम्यते। किं च वृद्धिः क्षयश्चेति यौ परिवर्तनप्रकारौ स्तस्तयो-रपि प्रतिपादनं सन्दर्भस्य लक्ष्यमिति तयोरपि विषये सोदाहरणं विमर्शो विधीयते।

तत्र प्रथमे परिच्छेदे विषयवस्तुनोऽवतारणं न कृतम्। केवलं संदर्भस्य लक्ष्यम्, भित्तिः, योजना, औचित्यम्, गृहीता पद्धतिः, इत्येषां सूचनां प्रदाय सन्दर्भगतविषयप्रवेशाय उपोद्घातो विरचितः। अत एवास्य परिच्छेदस्य नाम 'सन्दर्भस्य लक्ष्यं योजना च' इति वर्तते। भारोपीयभाषावर्गः सन्दर्भस्य विचारसीमा। तस्मादेवोदाहरणानि आहर्तव्यानि। आहृतेषु च परिवर्तनानि परीक्षितव्यानि। ततश्च एतद्वर्गगतसकलभाषाव्यापिनो नियमा अन्वेष्टव्याः। तत्र सकलभाषाज्ञानमसम्भवम्। एकस्या अपि भाषायाः सर्वे शब्दा न ग्रहीतुं शक्यन्ते। अतः कतिपयभाषाभ्यः कतिचिच्छब्दा एव गृह्यन्ते। तेषु मुख्यतया प्राच्यभाषाप्रतिनिधिरूपेण प्राचीना संस्कृतभाषा प्रतीच्यभाषा-प्रतिनिधित्वेन चान्तर्जातिकी भाषा गृहीता। आहत्य पञ्चचत्वारिंशद्भाषाणां शब्दास्तुलिताः। तत्र गृहीतानि त्रिविधान्युदाहरणक्षेत्राणि प्रदर्शितानि। [illegible]नार्थं गृहीतेषु शब्दयुग्मेषु पौर्वापर्यविन्यासः, पाश्चात्यप्राच्यवर्णमालाः

( alphabet ), इङ्गिलश्लिपीनामपूर्णता याहच्छिकता सकलवर्ण-प्रकाशेऽसामर्थ्यं च, संस्कृत-इङ्गिलश्वर्णानां साम्यवैषम्ये - इति अस्मिन परिच्छेदे उपक्षिप्तम् ।

वर्णपरिवर्तनाख्ये द्वितीयपरिच्छेदे - उच्चारणभेदस्य हेतुः, आदेशवादो विकृतिवादश्चेति मतद्वैधम्, वर्णपरिवर्तनस्य विनिमयवृद्धिक्षयात्मकास्त्रयः प्रकाराः, लिपिभिरप्रकाश्याः श्रुतिस्वराः, सर्वेषां वर्णानां स्तरक्रमः, अस्वीकृतानि परिवर्तनान्येव दोषाः, कतिपयव्याकरणसंज्ञासु वृद्धिक्षयतत्त्वम्, आंशिकवृद्धिक्षयस्थले पूर्वांशपरिवर्तनदृष्ट्यैव संज्ञाकरणम्, परिवर्तनानां प्रत्यक्षपरोक्षभावेन तेषां च पुनः सजातीयविजातीयभावेन प्रकारभेदाः, व्याकरणस्य भाषाविज्ञानस्य च लक्ष्यपार्थक्यम्, परिवर्तनस्य अकल्पनीया बन्धुरा गतिः, तस्य वेगवैषम्यम्, परिवर्तनविशेषाणां विविधभाषासु आधिक्यं न्यूनता च - इत्येते विषयाश्चर्चिताः । ततो वर्णानां मध्ये के साक्षादागम-लोपभाजः, के वा नेति परीक्ष्य सयुक्तिकं च परिसंख्याय उदाहरणानि दत्तानि । आगमलोपधर्मकाणां वर्णानां माहेश्वरसूत्रेषु श्रेणीबद्धभावेन सज्जा, तेषु केषांचित्तत्र अनुबन्धवर्णभावेन विन्यासः, इत्युद्भाव्य अपरेषां ग्रहणाभावे हेतुरभ्यूहितः । एतत्प्रसङ्गे दन्त्यवर्णानां दुर्बलतमत्वं प्रतिपादितम्, वर्णबन्धे विविबद्धा योजना आविष्कृता, ऩ्-म्-स्वरकल्पनाया अयाथार्थ्यं च प्रदर्शितम् ।

तृतीयपरिच्छेदे वर्णपरिवर्तने विविधप्रभावाणां समीक्षावसरे - वर्णानां तदुच्चारणस्य श्रवणस्य च प्रकृतिः, वर्णानां पारिपार्श्विकपरिस्थितेः प्रभावात् पूर्ववर्णेषु परवर्णेषु वा परिवर्तनम्, विविधोच्चारणस्थानाभ्यन्तर-प्रयत्नबाह्यप्रयत्नानां परिवर्तनाद्वर्णपरिवर्तनम्, परिवर्तने क्वचित्समीभावः क्वचिद्विषमीभावो वा, पारिपार्श्विकपरिस्थितिप्रभावस्य दूरप्रसारित्वम्, आसन्नवर्णस्य परिवर्तनस्य प्रभावः, विविधस्थानेषु वर्णस्य अवस्थिते-र्वैशिष्ट्यम्, अभिनिधानाख्यो व्यञ्जनस्य पूर्णं आंशिको वा क्षयः, संयुक्तवर्णेषु केषाञ्चित् संयोगपिण्डरूपेण केषाञ्चिच्च मध्यप्रविष्टस्वरांशेन पूर्वपरव्यञ्जन-विच्छेदात् स्फोटनरूपेण उच्चारणम् , एकस्या उच्चारयितृगोष्ठ्याः पारि-पार्श्विकपरिस्थितेः प्रभावः, विविधाया उच्चारयितृगोष्ठ्याः स्वस्वपारि-

पार्श्विकपरिस्थितेः प्रभावः, क्वचिद्वर्णस्य पारिपार्श्विकपरिस्थित्यपेक्षया उच्चारयितृपारिपार्श्विकपरिस्थितेर्बलवत्त्वम्, व्यवहारे सहचारिणः शब्दस्य प्रभावः, सादृश्याभासस्य प्रभावः, क्वचित् प्रभावपाताभावाद् वर्णानामवशङ्गमत्वम् , वर्णानां स्थितिविनिमयः, परिवर्तनस्य अन्तरङ्गत्वं बहिरङ्गत्वं च – एते विषया विश्लेषिताः, कल्पितविवरणचित्रयोः परिवर्त्तनप्रकारभेदानां परिवर्तनप्रभावकाणां च प्रदर्शनं विहितम् ।

चतुर्थपरिच्छेदे – शब्दभाषयोर्निर्गमः, व्याकरणैस्तत्प्रतिपादने आंशिकी सफलता, निर्गमस्य प्रत्यक्षत्वं परोक्षत्वं च, निरुक्तस्यावश्यकता, परिवर्तनस्य गतिवैविध्याद् भाषाणां निर्गमनलोपधर्मकत्वाच्च क्वचिन्निर्गमकल्पने भ्रान्तिः-इत्येतान् विषयान् प्रकाश्य शब्दनिर्माणरीतेरनेकविधत्वात् निर्गमकल्पनाशीलस्य तस्याः साङ्गोपाङ्गज्ञानस्यावश्यकता प्रतिपादिता, यास्कीयं निर्वचनविषयकमनुशासनं च समीक्षितम् ।

पञ्चमपरिच्छेदे निवेशिता विषयाः खलु :— पाश्चात्त्यवर्णमालासु क्रमाभावः, स्वकल्पिता (१) वैज्ञानिकी (२) श्रेणीसंबन्धसूचिका चित्रगता च वर्णसञ्ज्ञा, तान्त्रिक्यां माहेश्वरसूत्रगतायां ऋक्प्रातिशाख्योक्तायां चित्रप्रदत्तायां च वर्णसञ्ज्ञायां वैज्ञानिकताया उल्लङ्घनं तत्र कारणानि च, क्षेत्रम्, स्तराः, उच्चारणस्थानम्, घोषाघोषत्वे, अल्पप्राणमहाप्राणत्वे, अनुनासिकाननुनासिकत्वे इत्यादिदिशा चित्रे वर्णश्रेणीसञ्ज्ञायाः समीक्षणम्, वर्णानां विविधाभिः आकृतिभिः, गाणितिकरीत्याऽवस्थानैः, रङ्गैः, एकक-युग्मक-रेखाणां विविधरङ्गैश्च वर्णप्रकृतीनां परिवर्तनविशेषाणां च प्रकाशनम्, अ-ह-ऋ-लृ इत्येषां वैशिष्ट्यप्रकटनम्, माहेश्वरसूत्रेषु स्वरादौ स्वरान्ते व्यञ्जनादौ व्यञ्जनान्ते च एकस्यैव ह-स्य विन्यासार्थं वर्णकुण्डल्या उद्भावनम्, कांश्चिद्वर्णान् क्षेत्रद्वयसीम्नि विनिवेश्य तत्कारणप्रदर्शनम् - इति ।

षष्ठे परिच्छेदे वर्णसञ्ज्ञाचित्रमाधृत्य वर्णसामञ्जस्यसूची प्रदत्ता, कस्य वर्णस्य केन कीदृशं सामञ्जस्यमस्तीति च तत्र प्रकटितम् । स्वराणां परस्परविनिमयाभावं विविच्य तत्र च वृद्धिक्षयतत्त्वयोर्विनियोगं प्रकल्प्य पञ्चचत्वा-

रिशत्प्राच्यपाश्चात्यभाषाणामुदाहरणेषु सामञ्जस्यमूलकवर्णपरिवर्तनस्य प्रदर्शनं विहितम्। तदवसरे च केषांचिद्वर्णानां विषये आप्तानां विचाराः प्रकाशिताः। श-ष-सा-नामल्पप्राणत्वपक्षेऽप्युदाहरणानि प्रदाय अंशमिश्रणं परोक्षपरिवर्तनञ्च सदृष्टान्तमुपस्थाप्य परिच्छेदः सन्दर्भश्च समापितः।

## ३. कासांचिद् भाषाणां केचिदेव शब्दास्तुलनार्थं लभ्यन्ते

वर्णाः शब्दानामङ्गानि, शब्दाश्च भाषायाः। भाषा अपि तत्तद्भाषा-परिवाराणामङ्गानि, ते ते परिवाराश्च भाषाग्रामस्य। अस्यां स्थितौ वर्ण-परिवर्तनचर्चायां कर्त्तव्यायां प्रथमं भाषाग्रामचर्चा आवश्यकी भवति। तथापि जटिलत्वाद् बाहुल्यभीतेश्च सा न कृता।

सर्वा भाषाः, कस्याश्चिद्भाषायाः सर्वे शब्दा वा विवेचनस्य नैव विषयीकृताः, न वा तथा कर्तुं पार्यते। यतः स्मरणातीतसमयादारभ्य अगणितैरुच्चारयितृभिरुच्चार्यमाणा देश-कालो-च्चारणयन्त्रा-दीनां विभेदा-दगणितधाराभिः प्रवहन्ती शब्दपरम्परा एकत्रावस्थापयितुमशक्या। किं च संस्कृति-सभ्यता-चिन्तनशैल्यादिभेदाद् भिद्यमानेषु जनसमूहेषु कतिपयाना-श्रित्यैका भाषा कतिपयानन्यांश्चाश्रित्यापरा भाषा प्रवर्तते। तथा कस्या-श्चिद् भाषायाः केचिच्छब्दाः कतिपयैर्व्यवह्रियन्ते, तैरव्यवहृताः केचिच्छब्दा अपि तदन्यैः - इत्येवंक्रमेणोपचीयमानानां भाषाणां तच्छब्दानां च संख्या-धिक्यमपि सकलशब्दाहरणाशक्यत्वे हेतुः।

यथैषां जनसमूहानामुत्पत्तिरस्ति, लोपोऽप्यस्ति, तथा भाषाणामपि तौ स्तः। क्रैस्ताष्टमशतके हिन्दीभाषाया नामापि नासीत्, दशमशतके तु सा येन केनापि रूपेणाविर्भूता सती साम्प्रतं भारतस्य राष्ट्रभाषापदपर्यन्त-मुन्नीता। पञ्चमशतके अविद्यमानाऽपि इङ्ग्लिश्-भाषा सप्तमशतके केनचि-दाकारेण कृतपदा सती क्रमशः King Alfred-Chaucer-Shakespeare-प्रभृतीनां समये उत्तरोत्तरविकासमधिगम्य बाल्यरूपं परित्यक्तवती, सम्प्रति पूर्णं यौवनमावहति च।

कस्याश्चिद् गोष्ठ्याः कालवशात्तिरोधाने सत्यपि तत्पुत्रपौत्रादि-परम्परा तदुत्तराधिकारिणी सती तस्या वंशरक्षां सम्पादयति। तथा स्वाश्रयभूतेषु सर्वेषु जनेषु दिवं गतेषु निराधारा भाषा स्वयमुच्छिद्यमानाऽपि स्वोद्भूतभाषापरम्परया स्ववंशमव्याहतं रक्षति। भारतीया पालिभाषा जर्मनदेशीया गथिक्भाषा च नाधुना जीविते। ते हि पुत्रीस्थानीयासु भाषासु उत्तराधिकारं समर्प्य भूपृष्ठात्तिरोहिते। कुत्रचिच्च काचिद् भाषा प्रतिकूलपरिस्थितौ पतिता निर्वंशैव व्यापाद्यते। कुत्र कुत्र का का भाषा नूतनतयोदेति, कुत्र कुत्र का का चास्तं याति, के के वा शब्दा नूतनतया भाषां प्रविशन्ति, के के वा लुप्यन्ते - एतस्य परिसंख्यानं दुष्करमेव। यथोत्पन्नः शिशुः क्रमशः परिवर्धमानः कैशोरं यौवनं चाधिगम्य विविधक्षय-हेतुकायां जरायां पदं निदधाति, ततश्च मृत्युमेति, तथा उत्पद्य परिवर्धमाना भाषाऽपि क्रमशो विविधां ह्रासविकासावस्थामङ्गीकृत्य भूपृष्ठाल्लुप्यते। काश्चिद् भाषामपमृत्युरपि कवलीकरोति। अतः का भाषा कदोत्पद्यते, कति वर्षाणि च जीवतीति सर्वथा वक्तुमशक्यमेव। अपि च इयतैव भाषापरिवारस्य तदुच्चारयितॄणां च न समाप्तिः, भविष्यति काले परम्पराक्रमेण बह्वीनां भाषाणां बहूनामुच्चारयितॄणां च जनिष्यमाणत्वात्।

अतो जीवितानां मृतानां जायमानानां जनिष्यमाणानां च सर्वासां भाषाणां, तथाभूतानां च कस्याश्चिद् भाषायाः सर्वेषां शब्दानामेकत्रानुपलब्धेः न ते यथार्थभावेन परीक्षितुं पार्यन्ते। तेनास्मिन् सन्दर्भे कतिपयानां भाषाणां केचनैव शब्दास्तुलनार्थं गृहीताः। तथापि कस्मिंश्चित्काले कस्याश्चिद् भाषायाः कैश्चिच्छब्दैः सह स्थानान्तरे कालान्तरे च व्यवह्रियमाणानां तस्या एव भाषायाः शब्दानां तत्परिवारगतभाषान्तरशब्दानां वा तुलनायां विविधदेशकालेषु प्रयुज्यमानस्य तद्भाषापरिवारस्य वर्तमान-भूत-कालयोः परिवर्तनतत्त्वमूनाधिकभावेनावगन्तुं शक्येत। तदाधारेण च भविष्यत्कालोद्भवा परिवर्तनरीतिर्नूनमेव सुकल्पा भवेत्।

## ४. उदाहरणानां भाषाः

परिवर्तनाख्यापकानि यान्याधृत्य वर्णसज्जाचित्रं कल्प्यते, तान्युदाहरणानि भारोपीयभाषापरिवारादाहृतानि । यतः स्वप्रान्तीयभाषायाः स्वराष्ट्रभाषाया अन्ताराष्ट्रियभाषायाश्चाङ्गितया स्थितोऽयं परिवारः अङ्गभाषासंख्यया व्यवहारक्षेत्रविस्तारेण च महत्तमा वर्तते। इमान्युदाहरणानि मुख्यतया संस्कृतभाषया संबद्धानि, गौणतया च भारोपीयपरिवारगताभिर्विविधभाषाभिः ; मनीषिभिरेतत्परिवारे संस्कृतस्य मुख्यतास्वीकारात् । किन्तु केवलं संस्कृतादुदाहरणाहरणे विवेचनस्य अपूर्णतैव स्यात् । न खलु संस्कृतवर्णाः संस्कृतस्यैव निजस्वानि ; तत्सामकालिकीषु प्राक्कालिकीषु तदुद्भवासु च भारोपीयपरिवारगतासु भाषासु अपरिवर्तितरूपेण, किञ्चित्परिवर्तितरूपेण वा तेषां व्यवहारात् । अतो विविधासु भारोपीयभाषासु वर्णानां गतस्थितिपर्यालोचनं विना वर्णपरिवर्तनरहस्यनिरूपणमेकदेशि स्यादिति भिया संस्कृतेतरभाषाभ्योऽप्युदाहरणान्याहृतानि । तत्र संस्कृतशब्दस्य इङ्ग्लिश्शब्दस्य च प्रसिद्धत्वात्तौ विहाय इतरभाषोदाहरणानां दक्षिणे पार्श्वे तत्तद्भाषानाम्नां प्रथमाक्षराणि प्रदत्तानि, येन तानि कस्यां भाषायां व्यवह्रियन्त इति ज्ञातं स्यात् । देवनागरीलिप्या लिखितस्य यस्य शब्दस्य दक्षिणपार्श्वे भाषाविशेषसूचना नास्ति, स संस्कृतशब्द इति बोध्यम् भाषासूचनारहित इङ्ग्लिश्-लिपिलिखितः शब्दोऽपि इङ्ग्लिश्-शब्दो ज्ञेयः । सन्दर्भेऽस्मिन् इङ्ग्लिश्संस्कृतशब्दयोरुदाहरणप्राचुर्यात् अनेनोपायेन बहुत्र भाषासूचकाक्षरविन्यासगौरवं परिहृतम् । भारोपीयेतरपरिवारगतवर्णपरिवर्तनविचारो नात्र क्रियत इति तद्भाषाभ्य उदाहरणानि नैव दत्तानि ।

उपलब्धभाषाशब्दानामेव वर्णपरिवर्तनमत्र सन्दर्भे विवेचितम् । तेनादिमभारोपीयभाषारूपेण भाषाविज्ञाने कल्पिताया भाषायाः शब्दानां नात्र निवेशः कृतः; न वा तदाभिमुख्येन भाषाविज्ञाने ये विचाराः प्रवर्तन्ते, याश्च पद्धतयोऽनुस्रियन्ते, तेषां विचाराणां तासां पद्धतीनां वाऽनुगमनं विधीयते । अतो बुधधातोर्वः *भेउध् इति कल्पितादिमभाषाशब्दगत-

भ-स्य परिवर्तितरूपमिति न विवेचितम्, शः आदिमभाषाकल्पित-क्य( $\hat{k}$ )-वर्णादुद्भूत इति विषयेऽधुना मौनमवलम्ब्य मौलिकवर्णरूपेण गृहीतः। पुरा क-ख-पा-नां तालव्यगौणकमोष्ठ्यगौणकं चोच्चारणमासीदिति विचारो नादृतः। एवमन्यदपि ज्ञेयम्। कल्पितशब्दानाम् अग्रहणान्न केवलं संस्कृतस्य, अपि च 'शतम्'-वर्गगतायाः 'केंतुम्'- वर्गगतायाः कस्या अपि भाषायाः कल्पिता-दिमभाषोद्भूतत्वविषये विचारः स्वत एव निवृत्तः। तेन *घेन्स् > हंस, goose इत्यादिकल्पनमुपेक्षितम्।

## ५. उदाहरणानां क्षेत्राणि

उदाहरणानां त्रीणि क्षेत्राण्यत्र सन्ति। तानि खल्विमानि भवन्ति—

(१) कस्यांचिद्भाषायां व्यवह्रियमाणौ मौलिकतदुद्भवशब्दौ एकमुदाहरण-क्षेत्रम्। यथा— भ्रूकुंसः>भ्रकुंसः। अत्र भ्रुवा कुंसो यस्य इति विग्रहे भ्रूकुंस इति रूपं न्याय्यम्। नूनं कालक्रमेण विषमाभावपद्धत्या प्रथम-द्वितीयाक्षरगतयोः उकारयोः एकस्य (प्रथमस्य) अकारत्वं जातम्। ततश्च तस्यापि साधुशब्दरूपेण ग्रहणार्थं कात्यायनेन वार्तिकं[६] रचितं स्यात्। अतः भ्रूकुंस-भ्रकुंसशब्दौ संस्कृते यथाक्रमं मौलिकतदुद्भवौ।

यथा वा— एतद्मुरारिः> एतन्मुरारिः। अत्र एतद् - शब्दस्य अन्तिमो वर्णः दः सर्वदैव अननुनासिकरूपेण व्यवाह्रियत इति तस्य मौलिकत्वम्, नकारस्य च तदुद्भवत्वम्।

अत्र मौलिकशब्दस्य द्वावर्थौ— (क) तद्भाषायां प्रथममुत्पन्नः, (ख) तद्भवपरम्परायां प्राग्भवश्चेति।

उदाहृतौ भ्रूकुंस, एतद्, इति शब्दौ प्रथमार्थे मौलिकौ।

द्वितीयार्थे मौलिको यथा-(शृङ्ग>) शिङ्ग (ओ.)> सिंघ (ओ.)।

अत्र संस्कृतशृङ्गशब्दात् प्रथमोत्पन्नत्वात् शिङ्गशब्दः प्राग्भवतद्भवशब्दः, शिङ्गशब्दाज्जातः सिंघ-शब्दश्च पश्चाद्भवतद्भवशब्दः। तस्मात् ओडिआ-भाषायास्तद्भवपरम्परायां शिङ्गशब्दः प्राचीन इति तस्य मौलिकत्वम्, सिंघशब्दश्चार्वाचीन इति तस्य तदुद्भवत्वम्।

---

६. अभ्रूकुंसादीनामिति वक्तव्यम् — सिद्धान्तकौमुदी (सि. कौ.) (१००१-सूत्रस्था)

(२) कस्याश्चिद् भाषाया मौलिकशब्दः, भाषान्तरव्यवहृतश्च तद्भवशब्दोऽन्य-दुदाहरणक्षेत्रम्। तद्भवशब्देनात्र कुत्रचित् साक्षात् प्राग्भवस्तद्भवशब्दः परामृश्यते, कुत्रचिच्च परम्परानिष्पन्नत्वात् पश्चाद्भवः। यथा—

संध्या > संझा (शौ. प्रा.) ; संझा (शौ. प्रा.) > साँझ (हि.) ;

हरिद्रा > हलद्दी (म. प्रा.) ; हलद्दी (म. प्रा.)> हलदि (ओ.)।

अत्र सर्वत्र द्वितीयस्थानोपात्ताः प्राग्भवतद्भवशब्दाः। प्रथमस्थानोपात्तेषु द्वितीयचतुर्थयोस्तद्भवत्वेऽपि तौ स्वभाषायां मौलिकौ। संध्या > साँझ (हि.), हरिद्रा > हलदि (ओ.) - इत्यनयोर्निर्गतशब्दौ परम्परानिष्पन्नत्वात् पश्चाद्भवतद्भवौ ; एतयोः संस्कृतोद्भवायाः प्राकृतभाषाया उद्भूतत्वात्।

इदमप्यत्रावधेयं यत् तद्भवरूपेण ये शब्दा उदाह्रियन्ते, ते सर्वेऽपि वस्तुतस्तत्पूर्वोपात्तभाषातो निर्गता इति नैव वक्तुं शक्यते। यतो हि उदाह्रियमाणाः शब्दा मौलिकत्वेन कल्प्यमानाया भाषाया अनुद्भूय प्राक्कालिकात् सामकालिकाद्वा भाषान्तरादुद्भूताः स्युः। विसंवादमिमभ्युपेत्यापि अगत्या आप्तोक्तिं स्वीयदृष्टिं च मानदण्डीकृत्य तत्तच्छब्दास्तत्तद्भाषोद्भूता इति व्यपदिश्यते।

(३) यत्रैकपरिवारगतयोर्भाषयोरर्वाचीनायाः साक्षात्परम्परया वा तदितरभाषोत्पन्नत्वं केचिदेवाङ्गीकुर्वन्ति, न तु सर्वे - तादृशभाषाशब्दा इतरदुदाहरणक्षेत्रम्। यथा— शर्करा : suger। ईदृशोदाहरणेषु प्राचीनभाषागतवर्णानामर्वाचीनभाषासु गतिस्थिती परीक्षितुं शक्येते। कैश्चित् तत्समत्व - तदुद्भवत्वयोरस्वीकारेऽपि सर्वेऽपि परिवर्तननियमा अत्रापि प्रयोज्या भवन्ति।

## ६. सिद्धासिद्धशब्दाः

शंसितत्रिविधक्षेत्रगतोदाहरणशब्देषु कश्चिदविभक्तिः कश्चिच्च सविभक्तिर्वर्तते। तत्राविभक्तिर्यथा— त्रात> त्राण ; पृष्ठ> पुट्ठ (म. प्रा.) ; पितृ : vater (ज.) ; गम् : come ; पठ्> पढ (हि.)।

अधातुरविभक्तिः शब्दः सिद्धान्तचन्द्रिकायां 'नाम' इति संज्ञितः[७] अष्टाध्याय्यां च 'प्रातिपदिक' इति[८]। सविभक्तिर्यथा— द्वितीयायाम् > द्वितीयस्याम् ; तस्मिन् > तहिं (म. प्रा.) ; रामस्य : Rama's ; पठति > पढे (ओ.)। अष्टाध्याय्यां 'पद' इति एषां नाम[९]।

द्विविधोऽप्ययं शब्दो व्यवहारयोग्यः। अस्य नाम सिद्धशब्द इति। व्याकरणेन कल्पिताः सिद्धशब्दस्य पूर्वावस्थाः असिद्धावस्थाः प्रक्रियादशा इति वोच्यन्ते। एषां व्यवहारो भाषासु न भवति। यथा — हस् हस् अ > जहास इत्यत्र 'जहास' इत्येव सिद्धशब्दः, हस् हस् अ, ह हस् अ, झ हस् अ, ज हस् अ इत्येतेऽसिद्धशब्दाः।

क्वचित् मूलरूपात् परिवर्तितरूपप्राप्तिमध्ये केचित्परिवर्तनस्तरा वर्तन्ते येषां स्थितिर्व्याकरणे अप्रतिपादिताऽपि परिवर्तनक्रमदृष्ट्या उचिता ; परन्तु ये कस्यामपि भाषायां व्यवहृताः स्युः, न वा स्युः। यथा- उपाध्याय > उबाध्याय > उबाज्झाय > उबज्झाय > ओज्झाय > ओज्झाअ (म. प्रा.)> ओझाअ> ओझा (ओ.)>झा (हि.)। अत्र मध्यवर्तिस्तरेषु द्वौ एव भाषाव्यवहृते रूपे। यथा वा— विधान> बिधान (ओ.)> बिहान> भिआन> भिआण (ओ.)। अत्र बिहान - भिआनौ न कस्याञ्चिद्भाषाया रूपे। इतराणि तु भाषारूपाणि। अव्यवहृताः सर्वे शब्दा अपि असिद्धशब्द-वाच्याः।

एतज्जातीयाः शब्दा अपि सन्दर्भेऽस्मिन्नुदाहृताः। सर्वेषामसिद्ध-शब्दानां दक्षिणपार्श्वे 'असि.' इति असिद्धत्वप्रकाशकः सङ्केतः प्रदत्तः।

केचित् प्रत्यया अप्यत्रोदाहृता येषामभिधानं नैव सिद्धशब्दनाम्ना न वा असिद्धशब्दनाम्ना भवति। यथा— oi (ग्री.)> oe (लै.), तर : ter.

---

७. अविभक्ति नाम - सिद्धान्तचन्द्रिका (सि. च.) (७। १)

८. अर्थवदधातुरप्रत्ययः प्रातिपदिकम् - अष्टा. (१। २। ४५)

९. सुप्तिङन्तं पदम् - तत्रैव (१। ४। १४)

## ७. सामञ्जस्योदाहरणयुग्मानां पौर्वापर्येण विनिवेशपद्धतिः

सामञ्जस्यप्रदर्शनार्थं दीयमानानि उदाहरणयुग्मानि एकभाषा-गतानि चेत्तर्हि असिद्धशब्दाः, अकृतसन्धिशब्दाः, पूर्वकालात् प्रयुक्ता वा शब्दाः पूर्वमुपात्ताः; सिद्धशब्दाः, कृतसन्धिशब्दाः, परकालप्रयुक्ता वा शब्दाः पश्चादुपात्ताः। यथा— हस् हस् (असि.) > जहास; प्राङ् षष्ठः > प्राङ्क्षष्ठः; अ कुसः > अकुसः। अन्यथा तु प्रथमोत्पन्नाया भाषायाः शब्दाः पूर्वोपात्ताः, पश्चादुत्पन्नायाश्च पश्चादुपात्ताः। यथा— हरिद्रा > हलदि (ओ.) ; स्वसृ : sister.

सर्वेऽपि पूर्वोपात्तशब्दाः पूर्वमासन्, परस्ताच्च द्वितीयस्थाने तदुद्भव-तत्समञ्जसरूपेण दर्शिताः इति कल्पना न कर्तव्या ; यतः—

(१) इदमपि दृश्यते यत् अर्वाचीनभाषायां सृष्टाः केचिच्छब्दाः स्वसमकाल-व्यवहृतप्राचीनभाषायामपि व्यवह्रियन्ते। यथा— कागद-पेन्सिल-सरकार-सुलतानादयः शब्दाः संस्कृतेतरकालिकभाषासु सृष्टा अपि साम्प्रतं संस्कृते अपरिवर्तिताः किञ्चित् परिवर्तिता वा सन्तः कागद-पेन्सिल-सर्वकार-सुरत्राणादिरूपेण स्थानं लभन्ते।

(२) किं च अर्वाचीनभाषासु व्यवहृतानि प्राचीनभाषायास्तद्भवरूपाणि पुनरपि अधुना व्यवह्रियमाणासु प्राचीनभाषासु गृह्यमाणानि दृश्यन्ते। यथा— अङ्गार-पत्तन-भर्त्रादिशब्दाः प्राकृते इङ्गाल-पट्टन-भट्टादिरूपं धारयन्तो विकल्पेन तेनैव रूपेण संस्कृते व्यवह्रियन्ते। ईदृशशब्दाना-मुद्गमभाषा प्रायशो दुर्निरूपैव भवतीति अगत्या ते प्राचीनभाषा-शब्दस्थाने प्रक्षिप्यन्ते।

(३) अपरं च कासांचिद् भाषाणां पौर्वापर्यम् अद्य यावन्न निर्णीतम्। यथा— ओड़िआ-बेङ्गाली-हिन्द्यादीनाम्। आसामुत्पत्तिः समे समयेऽपि सम्भा-व्यते। समसमयाविर्भूतभाषासु कं कं देशं किं किं वा पात्रमाधारीकृत्य का का भाषा प्रथमतः, का का वा परस्तान्निर्गतेति निरूपणं कठिनमेव

भवति । इदं पुनः कठिनतरं विदधाति अतिदीर्घसमयावलम्बिनी भाषाया भाषान्तरोत्पत्तिः । तथाहि यदैव प्रथमं कस्याश्चिद् भाषायाः केचिच्छब्दाः किञ्चित् परिवर्तितं रूपं धारयन्ति, न तदैव भाषान्तरमुत्पद्यते, परन्तु ईदृशबहुपरिवर्तनानन्तरमेव नूतनभाषा स्वीकृता भवति ।

परिवर्तनबाहुल्यस्य समयसीमा महती नैकरूपा च । कस्याश्चिद् भाषायाः परिवर्तनबाहुल्यं वर्षाणां त्रिशतीमपेक्षत इति स एव सर्वभाषासु नियम इति नैवावधेयम्, परिवर्तनस्य देशकालव्यक्तिवैविध्यापेक्षत्वात् । नहि कयोश्चिद् भाषयोर्देशः कालस्तद्भाषितृगोष्ठी वा भिन्ना भवन्ति । अनेकभाषाजनन्याः कस्याश्चिद्भाषाया निर्गतायां क-भाषायामुच्चारणपरिवर्तनं प्रथमतो जातम्, ख-भाषायां च द्वितीयत इति कारणात् नियतमेव क-भाषा प्रथमतो जाता, ख-भाषा तु परस्तादिति अनुमानं नैव समीचीनं भवेत् । कदाचित् परस्तात् कृतपदमपि भाषापरिवर्तनं वेगाधिक्यवशात् प्रथमत एव ख-भाषासृष्टौ हेतुः स्यात् ।

एतत्सर्वं स्थलविशेषेषु शब्दानां प्राचीनाप्राचीनत्वनिरूपणे भ्रान्तिमेव सृजति । ईदृश्यां परिस्थितौ उदाहरणप्रदर्शनावसरे भ्रान्त्या क्वचित् प्राचीनशब्दस्थानेऽर्वाचीनशब्दविन्यासः अर्वाचीनशब्दस्थाने च प्राचीनशब्दविन्यासः सन्दर्भेऽस्मिन् संभाव्यत एव । परन्तु तादृशी भ्रान्तिः परिवर्तनप्रदर्शने नैव प्रतिबन्धकतामापादयेत्; केवलं परिवर्तनस्य विपरीतं स्वरूपं प्रतिपादयेत् । तद् यथा— हिन्दी प्रथममुत्पन्ना, ओडिआ च पश्चात् इति स्थिरीकृत्य ठग (हिं.) > ठक (ओ.) इति प्रदर्श्यते, येन प्राचीनभाषागत-ग-स्थाने अर्वाचीनभाषायां कः भवतीति सूच्यते । यदि कस्माच्चित् प्रमाणात् ओड़िआ हिन्द्याः प्रागुत्पन्नेत्युपलभ्यते, तर्हि स ठग (हिं.) < ठक (ओ.) इति विपरीतपरिवर्तनस्य विषयो भवेत्, येन शाक > शाग (ओ.) इत्यत्रेव ककारस्थाने गकारो भवतीति सूच्येत । एवं सत्यपि परिवर्तनस्य द्विमुखत्वात् तदेवैकं वस्तु प्रकाशितं भवेत् ।

## ८. कतिपया वैदेशिकवर्णाः

तृतीयक्षेत्रोदाहरणयोग्यानां वैदेशिकशब्दानां केचिदेव वर्णा भारतीय-भाषावर्णैः साम्यं लभन्ते, न तु सर्वे। यथा— स्वसृ : sister इत्यत्र उभय-भाषागतयोः सकारयोरैक्यमस्ति। परन्तु पत्र : feather इत्यत्र प, f इत्यनयोरोष्ठ्यत्वेनोच्चारणस्थाने समेऽपि आभ्यन्तरप्रयत्ने भेदो वर्तते। पकारो हि स्पर्शवर्णः, f तु ऊष्मवर्णः। इत्थम् f-q-w-z-लिपिभिरुच्चार्यमाणा वर्णाः संस्कृते न सन्ति। फ-क-व-जानामुच्चारणं तु पृथगेव। चर्व : chew-शब्दयोः चकारे समं स्थितेऽपि प्रथमे शब्दे स्पर्शः, द्वितीये च स्पर्शसंघर्षी भवति। कुट्ट : cut इत्यनयोः संस्कृते टो मूर्धन्यः, इङ्ग्लिश्भाषायां च दन्त्यः। दन्त्यत्वेऽपि संस्कृत-त-वत् तस्योच्चारणं न भवति, किन्तु मूर्धन्य-दन्त्ययोर्मध्यमस्तरकमेव, यद्दन्त्यभूयिष्ठत्वाद्दन्त्यमिति व्यपदिश्यते।

केषांचिद्वर्णानां लेखरूपाद् यादृशमुच्चारणमाशास्यते, न तादृश-मुच्चारणं भवति। यथा-- hūs (प्रा.इं.) शब्दः 'हौस्' इत्युच्चार्यते, न तु 'हूस्' इति। change इत्यादौ-उदीच्य-फ्रेञ्च्भाषायां च् इत्युच्चार्यते, केन्द्रीय-भाषायां तु श् इति।

एकवंशोद्भवास्वपि भाषासु इदं वर्णोच्चारणपार्थक्यमुच्चारयितृ-गोष्ठीनां देशकालादिविविधपरिस्थितिनिबन्धनम्। तुलनाकालेऽयं भेदोऽव-हेलितः।

## ९. पाश्चात्यभाषासु इङ्ग्लिश् प्रधानतया गृहीता

पाश्चात्यशब्दानामुच्चारणे लिपौ च ईदृशा अन्येऽपि भेदा वर्तन्ते, येषां ज्ञानं तुलनार्थमावश्यकम्। तद्विषये विविधवैदेशिकभाषाणां विचारे क्रियमाणे बाहुल्यं स्यात्, सन्दर्भश्च लक्ष्यच्युतः स्यात्; उपेक्षायां त्वङ्गहानिः स्यादित्युभयतःपाशा रज्जुः। अतोऽत्र भेदनिरूपणार्थं केवलमेका भाषा ग्रहीतुमिष्यते। तत्र जर्मानीभाषोत्पन्ना इङ्ग्लिश्भाषा न केवलं ग्रीक्-लैटिन्-

फ्रेञ्चादीनाम्[10], अपि च यूरोप्-एशिया-अमेरिका-अष्ट्रेलिआ-गतानां बहुभाषाणां[11] शब्दभाण्डारैः परिपुष्टा साहित्यदर्शनविज्ञानसमृद्धा अन्ताराष्ट्रियभाषारूपेण सम्मानिता बहुजनविदिता विशालतमस्य भारोपीयभाषापरिवारस्य प्रमुखभाषास्वन्यतमा भवति । एतद्भाषामाध्यमेनैव भारतीयाः इतरपाश्चात्त्यभाषाभिः कयाचिन्मात्रया परिचिताः । एतस्याश्च लिपिवर्णयोरत्यन्तमसामञ्जस्यमस्ति । तदर्थमुपादीयमानया इङ्गिलश्लिप्या ये वर्णाः प्रकाश्यन्ते, ते देवनागरीप्रकाशितसंस्कृतवर्णेभ्यः स्थलविशेषेषु पार्थक्यं धारयन्तीति तामेव भाषां प्रमुखतया इतराश्च पाश्चात्त्यभाषा गौणतयाऽवलम्ब्य सन्दर्भः प्रस्तूयते । इङ्गिलश्भाषायाः साम्यवैषम्याणां सम्यग् ज्ञाते तज्जातीयानामन्यासां भाषाणामपि साम्यवैषम्याणि केनचित् परिमाणेन अभ्यूहितुं शक्यानि भवेयुः । संस्कृतम् इङ्गिलश्भाषा च भारोपीयपरिवारस्य द्वे प्रधानभाषे । तस्मात् मुख्यतया अनयोस्तुलनायां विहितायां समग्रस्य भारोपीयपरिवारगतभाषावर्गस्य साधारणतत्त्वं विशेषभावेन, भाषामात्रस्य साधारणतत्त्वं च सामान्यभावेन अवगन्तुं शक्येत । एकस्या दिशो दिगन्तरं प्रवहन्त्याः कस्याश्चिन्नद्याः कस्मिंश्चिदेकस्मिन्नंशे स्थिताया धाराया जलमानीय वैज्ञानिकप्रणाल्या परीक्षायां कृतायां यथा तन्नदीजलगततत्त्वानि निर्णेतुं शक्यन्ते, तथैव भारोपीयपरिवारगतां यां कामपि भाषामवलम्ब्य समीक्षायां विहितायां तत्परिवारस्य साधारणस्वरूपं बुध्येत । किं च एकस्या नद्या विरुद्धदेशद्वयस्थधारापरीक्षणेन जलतत्त्वं देशकृतपार्थक्यानि च यथोपलभ्यन्ते, तथा प्राच्यपाश्चात्त्यभूखण्डस्थयोरनयोर्भाषयोस्तुलनेन भाषातत्त्वेन साकं देशकृतपार्थक्यानि न्यूनाधिकमात्रया ज्ञातुं शक्येरन् ।

१०- द्र. परिशिष्टम् (क)

११. Hence, it has come to pass that the modern English vocabulary includes words derived from every civilised language of Europe and from innumerate languages of Asia, Africa, America and Astrelia,

—The Making of English (Chap. 1, P. 102)

द्वयोः प्राचीनभाषयोर्द्वयोर्वाऽऽधुनिकभाषयोः तुल्यमानयोः सतोः कदाचित् भाषागताः पारस्परिकभेदा भषातत्त्वानि च सुस्पष्टानि न स्युरित्याशङ्काऽपि प्रधानतया प्राचीनतमसंस्कृतभाषयाऽर्वाचीनाम् इङ्गिलश्भाषां तुलयितुं लेखकमिममनुप्राणयत्।

१. तत्र भारतीयलिपिवर्णयोः सामञ्जस्यात् 'क' इति वर्णनाम, 'क' इत्येव च लिपिनाम। इङ्गिलश्भाषायामपि 'क' इत्येव वर्णनाम, किन्तु लिपिनाम 'सी' (c) इति वा 'के' (k) इति वा।

२. इङ्गिलश्भाषायां ४२ वर्णाः (phonemes) सन्ति। तेषां लेखेनाभिव्यक्तये A-तः z-पर्यन्तं षड्विंशतिरेव लिपयो वर्तन्त इति तासां संख्या नैव पर्याप्ता। सर्वेषां वर्णानां यथायथं प्रकाशेऽयमन्तरायः।

३. लिपीनां नामकरणमपि याहच्छिकम्। यथा—

(क) व्यञ्जनविशेषसूचकानि कानिचिन्नामानि स्वरान्तानि, कानिचिच्च व्यञ्जनान्तानि। यथा— b-c-d-g-p-t-v-y-j-k इति व्यञ्जनदशकस्य नाम स्वरान्तम्, f-h-l-m-n-s-x-इति व्यञ्जनसप्तकस्य व्यञ्जनान्तम्।

(ख) स्वरान्तनामस्वपि j-k- इति द्वयम् एकारान्तम्, न तु b-c-d- इत्यादिवत् इकारान्तम्।

(ग) f-h-l-m-n-s-इत्येषु ए-स्वरो नाम्नः पूर्वांशघटकः, r- इत्यत्र तु आ-स्वरः।

(घ) z इत्यस्य नामकरणमेतेभ्यः सर्वेभ्यो विलक्षणम्। तत्र हि न पूर्वांशः, नापि परांशः स्वरो भवति, अपि तु मध्यमांशः। किं च तन्नाम्नि नैकं व्यञ्जनम्, अपि तु एकाधिकं वर्तते ज- इति, ड-इति च। तच्च द्वयं नैकत्र, मध्ये स्थितात् स्वरात् पूर्वत्र जस्य, परत्र च डस्य सत्त्वात्।

४. (क) क्वचिदेकाधिकवर्णार्थमेका लिपिरत्र प्रयुज्यते। यथा— x इत्येका लिपिः क्-स्-इति क्रमेण मिलितं वर्णद्वयं प्रकाशयति box इत्यादिशब्देषु।

(ख) एकोच्चारणार्थं क्वचिदेकाधिका लिपिः प्रयुज्यते । यथा—phrage प्रभृतिशब्देषु p इति अल्पप्राणवर्णलिपौ h इति संयोज्य महाप्राण-वर्णः फ इत्युच्चार्यते । इत्थम् bh-ch-dh-gh-jh-kh-sh-th इत्यादिभिरेकैकवर्णोच्चारणम् । rail-शब्दे ai इत्यनेन ऐकारः, sound इत्यत्र ou इत्यनेन च औकारः प्रकाश्यते । rough enough-प्रभृतयः शब्दा अप्यत्रोदाहर्तव्याः ।

(ग) क्वचिदेका लिपि यं वर्णं प्रकाशयति, अन्या लिपिरपि तमेव वर्णं प्रकाशयति । यथा—

(i) cool इत्यत्र c-लिपिः कवर्णं प्रकाशयति । तमेव वर्णं kin इत्यत्र k-लिपिः प्रकाशयति ।

(ii) jump इत्यत्र j-लिप्या प्रकाश्यमानो जवर्णः gem इत्यत्र g-लिप्याऽपि प्रकाश्यते ।

(iii) keep, leave, niece, key, seize- इत्यत्र वर्तमानम् ee, ea, ie, ey, ei इति वर्णयुग्मपञ्चकम् एकमेवोच्चारणं प्रयोजयति, यत् I.P.A. संस्थाया 'i:' इति सङ्केतेन प्रकाश्यते ।

(घ) (i) एकैव लिपिः स्थलविशेषेषु पृथक् पृथग् वर्णानाचष्टे । यथा- एकैव 'a'-लिपि: father, all, any, fat, water - इति शब्दपञ्चके पञ्चविधोच्चारणं लभते । अस्मादेव कारणात् इङ्गिलशलिप्या लिखितस्य Rama इत्यस्य रमा, राम, रामा, रम इति चतुर्विधाः पाठा भवन्ति । शाकलो मद्राणां राजधानी बभूव - इत्यर्थे लिख्यमानं Shakal was the Capital of Madras इति वाक्यम् शाकलो मद्रासप्रदेशस्य राजधानी बभूवेत्यर्थमप्यापादयेत् ।

(ii) put, but, tube, rule - इति शब्दचतुष्टये u-लिपिश्चतुर्विधमुच्चार्यते ।

(iii) gradation-शब्दे d इत्यनेन डकारोच्चारणं संपद्यते, gradual इत्यत्र च जकारोच्चारणम् ।

(iv) basis - शब्दे सकारोच्चारणं प्रयोजयन्त्यपि s-लिपिः reason-शब्दे जकाररूपेणोच्चार्यते ।

(v) Cycle शब्दे y- लिपिः 'आइ' इति, bycycle शब्दे च 'इ' इत्युच्चार्यते ।

(vi) e-लिपिः deduct इत्यत्र इकारस्य devil इत्यत्र च एकारस्योच्चारणं प्रयोजयति ।

(vii) item-in-शब्दयोः i-लिप्या यथाक्रमम् आइ, इ-इत्युच्चार्येते ।

(viii) यथा x-लिप्या exercise शब्दे 'क्स्' इति भवति, तथैव examine शब्दे 'ग्ज्' इति भवति ।

(ix) beat-गतः ea इत्यंशो वर्तमानकाले ई इति, भूतकाले च ए इत्युच्चारणाय कल्पते ।

(x) death- the -शब्दयोः th इत्यस्योच्चारणं परस्परात् पृथग् भवति ।

(xi) समानरूपेण स्थितोऽपि ough-इति लिपिसमूहः through though, cough-इत्येषु यथाक्रमम् उ, ओ, फ्-इत्येषामुच्चारणे निमित्तं भवति ।

(ङ) क्वचिल्लिपिकृतमुच्चारणं दुर्निरूप्यं भवति । यथा— lieutenant इत्यत्र ieu कृतं फकारोच्चारणम् ।

लिपिवर्णयोरसामञ्जस्यम् इङ्गिलश्भाषाशिक्षायां काठिन्यमापादयति । या भाषा प्राक्कालिकमुच्चारणमक्षुण्णं रक्षति, साम्प्रतिकोच्चारणेन सह लिपेः सामञ्जस्यमस्ति न वेति न चिन्तयति, तस्यामीदृशी अपूर्णता स्वभावत एव तिष्ठतीति विमृशन् R S. Heffner इतरपाश्चात्यभाषापेक्षया इङ्ग्लिशभाषामपूर्णतमामधिकान्धकाराच्छन्नां च शंसति ।[१२]

१२. English orthography is more obscure and less selfconsistant than that of any other Western European language, but a very conventional orthography suffer more or less from this kind of inadequacy.

—General Phonetics (Sect. 303, Chap-4, P. 68)

किं च a-b-c-d-इत्यादय इङ्गिलश्भाषाया नैव निजा लिपयः, अपि तु भाषान्तराद्विविधसमयेष्वाहृताः। यथाह रघुनन्दनः :— लैतिनभाषाया रोमन्लिपिमालाया 'अबजद' इत्यस्मात् a-b-c-d-इति, हौवज इत्यस्मात् h-i-j- इति, 'कलमन्' इत्यस्मात् k-l-m-n- इति, 'कुरसत' इत्यस्मात् q-r-s-t- इति पञ्चदश लिपयः प्रथममाहृताः, इतराश्च परस्मिन् समये।[१३]

'नेमा रोमान्लिपिमालाया निजस्वानि, अपि तु उदीच्यसामि (Northern Semitic) भाषायाः। सा च लिपिमाला आर्मेइक्-एशियानिक्-यूनानी-एट्रस्कन् क्रमेण लैतिनं, तस्याश्चाङ्गलभाषां प्रविवेशेति वर्णयन् भोलानाथतिवारी कथयति यत्— न केवलम् इङ्ग्लैण्डः, अपि तु फ्रान्स्-स्पैन-इताली-पर्तुगाल-रोमानिया-जर्मनी-जेक्-पोलाण्ड्-तुरुष्काः आफ्रिकायाः केचिद्देशाश्चेति यूरोपीयाणि अयूरोपीयाणि च विविधानि राष्ट्राणि लैतिन-लिपिं स्वभाषायां निजीकृत्य व्यवहरन्तीति।[१४]

अत एतासाम् इङ्गिलश्प्रभृतीनां भाषाणां लिपिः स्वीयापर्याप्तता-योगात् तत्तद्वर्णानां पूर्णं प्रातिनिध्यं विधातुमसमर्था। Macdonell इङ्गिलश्भाषाविषये इमामेव धारणां पुपोष। तेनोक्तं यत्— 'वयं यूरोपीयाः सार्धद्विशतवर्षानन्तरमस्मिन् वैज्ञानिके युगे अद्यापि ईदृशीमेकां लिपिमाला-माश्रयामो या अस्मद्भाषावर्णमालायाः प्रातिनिध्ये अक्षमा इति।[१५]

---

१३. वैदिक संपत्ति (पृ. ३०७)

१४. लेतिन लिपिको यूरोप तथा यूरोप के बाहर के कई राष्ट्रोंने अपनी भाषाओं (अंग्रेजी, फ्रांसीसी, स्पेनी, इटाली, पुर्तगाली, रुमानिन, जर्मन, जेक्, पोलिष्, तुर्की तथा कुछ अफ्रीका भाषाओं) के लिये अपना लिये हैं। इस में कुछ ने चिह्नों तथा ध्वनिओं में परिवर्तन भी कर लिये हैं। अंग्रेजी में अक्षर यही हैं। —भाषाविज्ञान (पृ. ४५०)

१५. We Europeans, on the other hand, 2500 years later and in a Scientific age, still employ an alphabet which is not only inadequate to represent all the sounds of our language......

—A History of Sanskrit Literature (Chap. 2, P. 14)

"इङ्गिलश्भाषाया लिपिमालां परिवर्त्य तत्र विज्ञानसम्मतं रूपमापादयित्रे स्वकीयां सर्वां सम्पदं दास्यामि" इति Bernerd Shaw स्वाभिलाषं प्रकटितवानिति श्रूयते[१६]।

ईदृश्यां परिस्थितौ केवलां लिपियोजनामवलम्ब्य इङ्गिलश्-भाषावर्णोच्चारणविचारोऽनुपयुक्तः।

तुलनार्थं तु केवलोच्चारणरूपं न लक्ष्यसाधकम्। इङ्गिलश्-भाषाक्षेत्रस्य विविधेषु भागेषु विविधमाकारं धारयतामुच्चारणरूपाणां कतमद् ग्राह्यमिति प्रश्नः अत्रोदेति। यथा-उदीच्याम्ब्रिआभागे व्यवहृताया (North Umbrian) इङ्गिलश्भाषाया उच्चारणापेक्षया इङ्लैण्डीयोच्चारणं भिन्नम्। भारतस्य विविधभागेषु इङ्गिलश्भाषाया उच्चारणानि यथा भिद्यन्ते, तथा पृथिव्या भागान्तरेष्वपि। उत्कलप्रदेशे गञ्जाममण्डले man इत्यस्योच्चारणं 'मेन्' इति रूपेण, कटके च 'म्यान्' इति रूपेण क्रियते। 'mən' इति त्वस्य वास्तवं रूपम्। important शब्दः 'इम्पोर्टेण्ट्' इति गञ्जामे, 'इम्पोटेण्ट्' इति कटके चोच्चार्यते। न केवलमुच्चारणे भेदः, अपि च तत्तल्लिप्या लेखेऽपि। यथा- school- शब्दः गञ्जामे 'स्कूल' इति, पुर्यां च 'स्कुल्'इति लिख्यते। उत्कलीयेषु thank you, museum इति शब्दौ 'थेङ्क्यु, म्युजिअम्' इति रूपेण लिखत्सु उत्तरभारतीयाः 'थैंक्यू, म्यूजिअम्' इति लिखन्ति। ईदृश्यां विभिन्नतायां सत्यां कोशगतोच्चारणनिर्देशः शरणम्। अतः उच्चारणरूपस्य तुलनार्थं ग्रहणे असौकर्यं भवेदेव।

किंच स्थलविशेषेषु इङ्गिलश्भाषाया उच्चारणरूपापेक्षया लिपिसंयोजनरूपं प्राच्यपाश्चात्यशब्दावल्या अधिकसामञ्जस्यशीलम्। उदाहरणम्—ज्ञा : know। अत्र उच्चार्यमाणयोः ज्ञ_n-इत्येतयोः सामञ्जस्यं स्पष्टम्। ज-k-लिपिप्रकाश्ययोः जवर्ण-कवर्णयोः ज-ग-क-इतिरीत्या सामञ्जस्यं सूपपादम्। उच्चारणदृष्ट्या विचारे तु know इत्यत्र साम्प्रतं ककारस्यानुच्चारणात् कया रीत्या तेन ज-स्य सम्बन्धः प्रतिपाद्येत?

---

१६. अच्छी हिन्दी (पृ. ३८२)

gno (ले.)- (ze)cnown (प्रा. इ.) – शब्दावत्र तुलनीयौ, ययोः संस्कृत-ज कारेण समञ्जसौ g c-इति वर्णौ यथाक्रमं विद्येते। जानु, genu(ले.), cneo (प्रा. इ.), knee इति शब्दा अप्यत्र तुलनीयाः। know, knee इत्यादिषु k अनुच्चारितः (silent) इति कथ्यते। know इत्येतस्मात् पूर्वम् 'a' इत्युपसर्ग (prefix)स्य प्रयोगे acknowledge इति भवति, यत्र मृतः ककारो न केवलं जीवनं लभते, अपि तु द्विगुणप्रयत्नेनोच्चार्यते। नक्तम्-nox (ले.), nacht (ज.)- इत्येतैः night- शब्दस्य लिपिरूपम् उच्चारणरूपापेक्षया अधिकसामञ्जस्यं भजते। knight-शब्दस्य लिपिरूपमपि knecht (ज.) इति रूपेण सामञ्जस्यशीलम्। अत ईदृशस्थलेषु तुलनार्थं लिपिरूपाणामुपयोगः।

कथङ्कारमुच्चारणलिपिरूपयोरयं भेदोऽजायत – इति प्रश्नस्य विचारावसरे Gesperson उदाहरति यत् – पञ्चदशशताब्द्यां monthes, helpes इत्यादौ e इत्यस्यानुच्चारणेन भूयस्त्वेन संयुक्तवर्णा उदचार्यन्त। परशताब्दीषु च night, thought-प्रभृतिशब्दान्तर्गता-ght इत्यादयः, know, gnaw-प्रभृतिशब्दानामादिगताः - kn - gn-प्रभृतयश्च संयोगा लघूकृताः[१७] इति। तेनैषामनुच्चारणं जातम्।

अतो लिपियोजनानुसारेण यद्रूपं साधारणतया प्रकाशते, तेनैव रूपेण तुलना विधातव्येति स्थितम्।

तथापि स्वभाषायां सकलोच्चारणानां प्रातिनिध्यं कर्तुमशक्नुवाना इङ्ग्लिश्लिपिमाला स्थलविशेषेषु संस्कृतवर्णैर्यथायथं सामञ्जस्यं

---

१७. While the fifteenth century gradually increased the number of the consonant groups by making the e mute in monthes, helpes etc. the following centuries, on the contrary, lightened such groups as -ght in 'night', 'thought' (where the back-open consonant as German ch is still spoken in Scotch) and the initial kn, gn, in know gnow etc. -Growth and structure of the English Language (sect. 5, chap-1, P. 4)

प्रदर्शयितुं नूनमेवासमर्था। तथाहि वर्ग्यमहाप्राणवर्णा इव ऋ-लृ-ङ-ञ-ण-विसर्गानुस्वारा इङ्गिलिश्लिप्या प्रकाशयितुं न शक्यन्ते। त-थ-द-ध-ट ठ-ड-ढा- नामुच्चारणं चात्र नास्तीति प्राक् सूचितम्।

तुलनासौकर्याय उच्चारणदृष्ट्या इङ्गिलिश्लिपिमालाया भारतीयलिपिमालाभिर्यथासम्भवं साम्यमत्र प्रदीयते—

| | | | |
|---|---|---|---|
| a, e, o, u-अ | o, oa-ओ | l- ल | gh- झ, घ |
| u, a, au, ou-आ | ou, eu, au- औ | c- स, श, ष, क | t- ट, त |
| e- इ, ए | y- इ, य | x- क्स, क्ष, ग्ज | th- ठ, थ |
| i- इ, | v, w व | y- ग, ज, य | d- ड, द |
| ai, ei, oi, ay, ey, | w- उ | s, g z, j- ज | dh- ढ, ध |
| oy, i- ऐ | bh- भ | s- ज, श, ष, स | p- प |
| e+व्यञ्जन+e, ee, | wh- ह्व | sh- श, ष | b- ब |
| ea, ie, ei, ey-ई | j- ज, य | n- ङ, ण, न, | m- म, अनुस्वार |
| u, oo-उ | r- र | अनुस्वार | h- ह, विसर्ग |
| oo-ऊ | | | |

इत्थं लिप्युच्चारणयोर्वैषम्येऽपि भारतीयभाषापरिवारगतत्वेन संस्कृतेन इङ्गिलशादीनां साम्यम्। देशकालयोर्दूरता वैषम्यमात्रावर्धिका भवतु नाम, परन्तु न सा एकपरिवारगतत्वमूलं साम्यं व्याहन्तुं प्रभवति। प्रस्तुते संदर्भे भारोपीयभाषागतवर्णपरिवर्तनस्य साधारणतत्त्वान्येव समीक्षितव्यानि, न तु तत्तद्भाषागतानि असाधारणतत्त्वानीति सा सा विषमता लक्ष्यसिद्धौ नैव प्रतिबन्धिका।



# द्वितीयः परिच्छेदः

## वर्णपरिवर्तनम्

### १०. उच्चारणभेदहेतवः

वर्णपरिवर्तनस्य साक्षात्कारणमुच्चारणभेदः। तस्मादत्रादौ उच्चारणभेदहेतवो निरूप्यन्ते। वाग्यन्त्रं खलु वर्णोच्चारणसाधनम्। प्रतिमुहूर्तं प्रतिगोष्ठि प्रतिव्यक्ति च तस्य सूक्ष्मभेदादुच्चारणभेदः। तथाहि—

१. जन्मसमयादारभ्य मृत्युसमयपर्यन्तं स्वत एव अङ्ग-प्रत्यङ्गानां सूक्ष्मातिसूक्ष्मभावेन परिवर्तनं जायते। वाग्यन्त्रमपि विविधमात्राकस्य परिवर्तनस्य वश्यतां गच्छत्येव। प्रतिमुहूर्तं सूक्ष्मतया जायमाना सा सा परिवर्तनमात्रा वर्णोच्चारणवैविध्यं सृजति। तच्च वैविध्यं भेदमात्रायामल्पायां नैव लक्ष्यं भवति, कालवशादधिकायां तु संलक्ष्यते।

२. नारीणां स्वरपेटिकायामुच्चारणसमये यादृशमधिकं कम्पनं भवति, न तादृशं नराणाम्। उच्चारयन्तं पुमांसमुच्चारयन्तीं वा स्त्रियमपश्यन्नपि जनः "अयं पुरुषस्वरः, अयं स्त्रीस्वरः" इति यद् व्यवस्यति, तत्र स्त्रीपुंसयोः पृथक् पृथक् कम्पमानाः स्वरतन्त्र्य एव कारणम्।

३. भौगोलिककारणजन्यं जलवायुखाद्यादीनां पार्थक्यमपि शरीरस्य सूक्ष्मभेदं सृजदुच्चारणतारतम्यमापादयति। यथा—पुरीवासिनामुच्चारणे यो विशेषो लक्ष्यते, न स सम्बलपुरवासिनाम्। उत्कलीयोच्चारणं महाराष्ट्रीयोच्चारणाद् भिन्नम्। भारतीयोच्चारणात् इङ्ग्लैण्डीयोच्चारणं भिद्यते। एतदुभयोच्चारणात् अमेरिकीयोच्चारणं पृथक् वर्तत एव।

४. त्रिविधाः प्राकृतिकाः सांस्कृतिकाश्च परिवेशाः सांस्कृतिकसम्पर्काश्च एकस्यैवोच्चारणस्य वैविध्ये हेतवो भवन्ति। यथा-पार्वत्यप्रदेशनिवासिनां ग्रीसीयानां विच्छिन्नभावेन विविधक्षुद्राञ्चलस्थत्वादुच्चारणभेदाः परस्परस्यापि दुर्बोधा भवन्ति। गाङ्गेयतीरोपकण्ठवासिनां या सूक्ष्मा विचारधारा दृश्यते, न सा पञ्जाबवासिनाम्। अत्र प्राकृतिकपरिवेशस्य प्रभावः सुस्पष्टः। अयं प्रभावश्च तत्तद्भाषायां तत्तदुच्चारणे च विविधतामापादयत्येव। समुद्रयात्रादिना समुद्रस्य पारीणा अवारीणाश्च यं सांस्कृतिकविनिमयं लभन्ते, न स समुद्रदूरवर्तिभिर्लभ्यते। अयं च सांस्कृतिकविनिमयो विचारधारासु तद्वाहनीभूतभाषासु च प्रतिविम्बितः सन् भेदं प्रकाशयति।

५. एकत्र निवसन्त्यपि विविधा गोष्ठी स्वस्वपारम्परिकोच्चारणं बहु मन्यते, यत्तस्याः पृथग्भूतेषूच्चारणेषु प्रतिफलति। तेन 'पुरुष एवेदं सर्वम्[१]' 'पुरुष एवेदꣳ सर्वम्[२]' इति द्विविधमुच्चारणं वेदभेदाद् भवति। एकयाऽपि भाषया व्यवहरतोरेकनगरवासिनोर्हिन्दुमुसलिमयोः कृषकापणिकयोर्वा पृथक् पृथगुच्चारणमत्रोदाहरणम्।

६. कस्मिंश्चित् स्थाने वर्धिता काचिद् गोष्ठी यदि सामाजिकराजनीतिकार्थनीतिकादिकारणवशतस्तत् स्थान विहाय स्थानान्तरमुपसर्पति, तत्र च कंचित् कालं वसति, तदा तस्या उच्चारणेन स्वसम्पर्कमागतानामन्येषामुच्चारणमूनाधिकभावेन प्रभावितं भवति, उच्चारणभङ्गी (intonation) च परिवर्तते। स्वयमपि सा गोष्ठी अन्येषां प्रभावं गृह्णाना स्वोच्चारणं कयाऽपि मात्रया संस्करोत्येव। स चायं प्रभावस्तद्गोष्ठ्याः कस्माच्चित् कारणात् महत्त्वे सति महान् भवति, इतरथा स्वल्पो भवति। देशाद्देशान्तरं वाणिज्याद्यर्थमागत्य निवसन्तीनामौपनिवेशिकं शासनं च प्रवर्तयन्तीनां गोष्ठीनामुच्चारणपरिवर्तनमत्रोदाहरणम्। अस्मिन् क्षेत्रे एका

---

१. ऋ. सं (१०।९०।२)

२. शुक्लयजुर्वेदसंहिता (शु.य.सं.) - (३१।१।२)

गोष्ठी गोष्ठ्यन्तरान्नूतनान्युच्चारणान्यपि आहरति। Car-शब्दगत आकारो भारतीयेभ्यः आकारेभ्यः उच्चारणे विलक्षणः किन्तु तस्यैव उच्चारणं भारतीयभाषासु व्यवहृतस्य car-शब्दस्यार्थे नूतनतया आहृतम्। यदा तु नूतनोच्चारणानि दुरुच्चाराणि भवन्ति, तदा तेषां स्थाने तत्सजातीयान्युच्चारणानि विधीयन्ते। यथा—England शब्दगतस्य 'a' इत्यस्य ओडिआभाषायाम् 'अ' इत्युच्चारणम्। वस्तुतस्तु एतस्योच्चारणमन्यादृशमेव, यस्य सङ्केत: अन्ताराष्ट्रियध्वनिविज्ञानपरिषदा 'æ' इति कल्पितः।

७. वर्णोच्चारणमनुकरणेनैव प्रवर्तते। शिशवः स्वसंपर्के स्थितानां प्रवयसामुच्चारणमनुकुर्वन्ति। वयोज्ञानविद्याबुद्धि-धनाधिकारादिवैशिष्ट्यभाजां व्यक्तीनामुच्चारणं साधारणतया जनसमाजोऽनुकरोति। अनेन प्रकारेण वर्णोच्चारणमज्ञातकालादारभ्य पुरुषानुक्रमेण अनुकरणमाध्यमेन स्वमस्तित्वमापादयदग्रे सरति। अत्रेदमवधेयं यत्- अनुकार्यस्य रूपरङ्गाकारप्रकारा अनुकरणे नैव सम्यक् प्रतिफलन्ति। ऊनाधिकभावेन तत्र परिवर्तनमवश्यम्भावि। उच्चारणानुकरणमेतं साधारणनियमं व्यतिक्रान्तुं नैव प्रभवति।

८. समानमातापितृभ्यां समानदेशकाल उत्पन्नयोर्यमयोरपि सन्तानयोरुच्चारणपार्थक्यं दृश्यत एव; पिण्डोपादाने संक्रान्तासंक्रान्ता विविधवंश्यगुणास्तत्र हेतवो भवन्ति, यत् खलु मृग्यं वंशविज्ञानशास्त्रतः।

९. कस्यचिन्मनुष्यस्य स्वरयन्त्रमन्येन समानमपि नैकं भवतीति सर्वेषामेवोच्चारणं स्वत एव पृथक्तया समाकलितं भवति। अतएव उच्चारणानुसारेण 'रामोऽयम्, हरिरयम्' इति ज्ञातुं शक्यते।

इत्थमुच्चारणभेद: कस्याश्चिद् व्यक्तेर्विविधोच्चारणेषु, गोष्ठीनां व्यक्तीनां च परस्परं पृथग्भूतेषूच्चारणेषु संलक्ष्यते। स च अनिर्दिष्टात् कालात् व्यक्तिभ्यो व्यक्तीः संक्रम्य ताभ्योऽन्यत्रान्यत्र प्रतिसंक्रम्य अगणितभेदोपभेदविशिष्टं वर्णोच्चारणं भेदोपभेदान्तरैः संयोज्य, अनवस्थितां भेदपरम्परां चावलम्ब्य प्रादुर्भवति।

## ११. भेदमात्राधिक्ये वर्णान्तरत्वम्

अनेन प्रकारेण भेदेनोच्चार्यमाणा अपि वर्णास्ते ते वर्णा इति प्रत्यभिज्ञायन्ते, तादृशसूक्ष्मभेदस्यावहेलनात्। एतद्वर्जं कानिचित् समान्युच्चारणान्यपि सन्ति, यानि एकेनापि जनेन पृथक् पृथगुच्चार्यमाणान्यपि एकैकवर्णमध्येऽन्तः पतन्ति। यथा- k इत्यनेन, स्थलविशेषेषु c इत्यनेन वा, क्रियमाणमुच्चारणमन्यत् ( यथा- keep, cat इत्यादौ ), q इत्यनेन क्रियमाणं चोच्चारणमन्यत् ( यथा- queue इत्यादौ )। तथाप्युभयमपि कवर्ण एव। न तु एकतरस्य वर्णान्तरत्वमिति वर्णविज्ञानविदः। एकस्य वर्णस्य ईदृशं पृथक् पृथगुच्चारणं समध्वनि( alophone )रिति, तादृशसमध्वनिसमूहं च ध्वनिग्राम ( phoneme ) इति वदन्ति[३]। अत्रापि सूक्ष्मभेदानामवहेलनात् स एव वर्ण इति व्यवहारः।

यदा तु भेदस्य मात्राधिक्यं भवति, तदा वर्णाः स्वसजातीयवर्णानां सीमारेखां स्पृशन्तः क्रमशस्तदाकाराकारिताः स्वं रूपं विहाय तत्तद्वर्णरूपेणाविर्भवन्ति। शाकशब्दस्य शकारककारौ सूक्ष्मभावेन भिद्यमानौ क्रमशो यथाक्रमं सकारगकारसीमारेखामस्पृशताम्। ततः परम् अनेन भावेन 'साग' इत्युच्चारणस्य सूत्रपातोऽभवत्। कालान्तरे हिन्दीभाषायां 'साग' इति शब्दरूपं समुपलब्धम्।

## १२. विकृतिवाद आदेशवादश्च

शाक>साग (हिं) इत्यत्र वर्णपरिवर्तनेन श-क-स्थाने स-गौ जायेते। एवम् अति अन्त>अत्यन्त। इत्यत्र ईदृशो वर्णपरिवर्तनप्रकारो वर्णविकार इति कैश्चिदुच्यते, वर्णादेश इति वा कैश्चित्।

दुग्धं यथा विकृतं सत् दधित्वमापद्यते, तथा कश्चिद्वर्णो विकृतीभूय वर्णान्तरत्वमापद्यते इति विकृतिवादस्य सारः। ऋक्प्रातिशाख्य-

---

३. सं. स्व. स. (प. १, पृ. २०)

तैत्तिरीयप्रातिशाख्य-शुक्लयजुःप्रातिशाख्य-सिद्धान्तचन्द्रिकादयो विकृतिवादपक्षपातिनः[४]। विकारस्तावदनित्यताया लक्षणम्। तेन एषां मते वर्णः अनित्य इत्यायाति।

पाणिनिस्तु वर्णानां नित्यत्वं नूनं स्वीकरोति, यस्य निदर्शनं भवति वर्णानाम् आदेशपक्षग्रहणम्[५]। पतञ्जलिरपि विकारवादः पाणिनेरनभिमत इति मतमुपस्थापयति[६]।

आदेशो नाम वर्णस्य स्थाने वर्णान्तरस्य प्रयोगः। एकस्मिन् वर्णे उच्चारयितव्ये तदकृत्वा तस्य स्थाने वर्णान्तरोच्चारणमिति यावत्। अत्र पक्षे कश्चिद्वर्णो वर्णान्तरत्वलाभाय विकृतो न भवति। दृष्टान्तोपन्यासपूर्वकमादेशवादस्य तत्त्वं विवेचितं शब्देन्दुशेखरे[७]। अयं तत्र नागेशस्याभिप्रायो यत्- 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्युच्यमाने परम्परानुसारेण सामान्यनियमानुसारेण वा यत्र दर्भाणां प्रस्तारः कर्तव्यः आसीत्, तत्र विशिष्टपरिस्थितिवशात् स न भवति, परन्तु तत्परिवर्तन शरप्रस्तार उचित इत्यर्थो भवति। तथा कस्यचिद् वर्णस्य स्थाने वर्णान्तरं भवतीत्युच्यमाने यत्र एको वर्ण उच्चारयितव्य आसीत, तत्र विशेषपरिस्थितिवशात् तत्र

---

४. (क) पदान्तादिष्वेव विकारशास्त्रं
पदे दृष्टेषु वचनात् प्रतीयात्। -ऋक्प्रातिशाख्यम् (ऋ.प्रा.) (२।५)
(ख) औकार आवम्-तैत्तिरीयप्रातिशाख्यम् (तै. प्रा.) (९।१५)
(ग) तमिति विकारः- शुक्लयजुः प्रातिशाख्यम् (शु. य प्रा.) (१।१३३)
(घ) इ यं स्वरे- सि.च. (३ १)

५. स्थानिवदादेशोऽनल्विधौ - (अष्टा.) (१।१।५६)

६. सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते॥ -महाभाष्यम् (म. भा.)
(१।१।१३ सूत्रस्थम्)

७. दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथा दर्शनात्- शब्देन्दुशेखरः
(श. शे.) (परिभाषाप्रकरणम्)

भवति, अपि तु वर्णान्तरमुच्चार्यते' इत्यर्थो भवति। तत्र यथा दर्भा विकृतीभूय शरत्वमापद्यन्ते इत्यर्थो न भवति, तथा अत्रापि 'वर्णो विकृतीभूय वर्णान्तररूपं गृह्णाति' इत्यर्थो न भवति।

गौतमीयन्यायसूत्रे एतदुभयं मतं समीक्षितम्[८]। तत्र आदेशवाद-पक्ष एव सिद्धान्तितः। वैज्ञानिकदिशाऽपि विचारे विकृतिवादपक्षो दुर्बल आभाति। इकारो यकारो भवतीत्युच्यमाने इकारस्य विकृत्या यत्वं भवतीत्यर्थो जायते यत् खलु तत्त्वतो नोपपद्यते। इकारो ह्यन्येन आभ्यन्तर-प्रयत्नेनोच्चार्यते, यकारोऽन्येन। अस्पृष्टप्रयत्नोच्चार्य इकारो विकृतीभूय नार्हति ईषत्स्पृष्टप्रयत्नोच्चार्यो यकारो भवितुम्। परन्तु "तत्र अस्पृष्टप्रयत्ने कर्तव्ये तमकृत्वा तत्प्रयत्ननिकटवर्ती ईषत्स्पृष्टप्रयत्नो विधीयत इति तत्र इकारोऽनुच्चारितो भवति, तत्स्थाने च यकार उच्चार्यते" इति कल्पनं न्याय्यम्।

लोपोऽपि पाणिनिव्याकरणे आदेश इति गृहीतः। लोपे वर्णस्य अनित्यत्वभिया 'अदर्शनं लोपः' (१।१।६०) इत्यष्टाध्यायीसूत्रस्य 'प्रसक्तस्य अदर्शनं लोपसञ्ज्ञकम्' इत्यर्थः क्रियते। अस्मिन् सन्दर्भे लोपः क्षयमध्येऽन्त-र्भवति। पाणिनिमते अधिगतस्यापगमः क्षय इत्यर्थो न भवति; किन्तु 'यस्य वर्णस्य शब्दमध्ये दर्शनं स्वाभाविकमासीत्, तस्य वर्णस्य अदर्शनम्' इत्येवार्थो भवति। आदेशो विकृतिश्चेति उभयमपि मतं समानरूपेण शाक>साग (हि.) प्रभृति लक्ष्यमनुधावति।

## १३. विनिमयो वृद्धिः क्षयश्च

शंसितस्य वर्णादेशस्य प्रतिपादनार्थं स्वकल्पिते वर्णसञ्ज्ञाचित्रे स्थानिनः आदेशस्य च मध्ये रेखासंयोगो विहितः। यथा- श—स। अत्र रेखासंयुक्तयोर्वर्णयोर्मध्ये किमपि सामञ्जस्यं वर्तते, येन स्थान्यादेशभावः सिध्यतीति रेखासंयोगेन सूच्यते। शाक>साग (हि.) इति पूर्वप्रदत्तोदाहरणे श-स्थाने सः अनेन साध्यते।

---

८. विकारादेशोपदेशात् संशयः। -गौतमीयन्यायसूत्रम् (२।२।१)

परन्तु रेखेयं द्विमुखं परिवर्तनं शंसतीत्यधिको विशेषः। तेन यथाऽत्र श-स्थाने सो विहितस्तथा सहजम् > शह्जे (मा.प्रा.) इत्यत्र स-स्थाने शो भवतीति रेखया सूच्यते। प्रतिपिपादयिषितस्यास्य परिवर्तनस्य भावः आदेशविकारशब्दाभ्यां प्रकाशयितुं न शक्यत इति अत्र 'विनिमय' इति नाम प्रदत्तम्। यथा रूप्यकविनिमयेन तण्डुलादिकं केनचिल्लब्धमित्युक्ते तण्डुलादिकविनिमयेन रूप्यकमन्येन लब्धमिति स्वत आयाति, तथाऽत्र शकारादिविनिमयेन सकारादिकं भवतीत्युक्तौ सकारादिविनिमयेन शकारादिकमन्यत्र भवतीत्यर्थः स्वत एवायातीति विनिमयतत्त्वसमन्वयः। अधिगतं परित्यज्य तत्परिवर्तेन अनधिगतस्याधिगमरूपो विनिमयो ह्यत्रोभयसाधारणः। उदाहरणानि—जगत् + ईशः > जगदीशः; गतः > गदो (शौ. प्रा.); पितृ : fadar (ग.); तमस् : dim- एषु तस्य दः। गोविन्दः > गोपिन्तो (म.प्रा.); दर्शन : tasn (आर्मि.); दारु : trewo(ज.)-एषु द-स्य तः।

वर्णांशस्यापि विनिमयो भवति। यथा—

दुह् धास(अभि) > अद्दृग्धाः; नाथते : नाधते[१]; कथा > कधा (शौ. प्रा.); ith (ग.) : इध (जे.); मधुरा > मथुरा; धातृ : theter (ग्री.); मधु : meth (ज.)। अत्र थ-ध-यो: पूर्वांशविनिमयः।

वर्णविनिमयो वर्णपरिवर्तनस्य एकः प्रकारः। वृद्धिः क्षयश्चेति द्वावन्यौ प्रकारौ। वस्तुतस्तु एतौ एकस्यैव वस्तुनो द्वे विपरीततत्त्वे।

---

१. नाथृ नाधृ याचने इति धातुद्वयं पाणिनिना पठितम् [सिद्धान्तकौमुदी (सि.कौ.) २२५९ सूत्रस्थम्]। किन्तु ईदृशस्थलेषु वर्णांशविनिमयेन द्विविधं रूपं जातमिति प्रतिभाति। तत्र कतरत् प्रथमं कतरच्च द्वितीयमिति निर्णयाभावात् यादृच्छिकभावेन पूर्वपरस्थानसमादेशः कृतः। यदि वस्तुगत्या पूर्वस्थः परत एव जातः स्यात्तर्हि इदं क्षयोदाहरणं भवेत्। एवं विनिमयोदाहरणेषु वस्तुस्थितौ विपरीतायामारोहावरोहव्यपदेशो विपरीतो भवेत्।

यथा वर्णविनिमयाख्यं परिवर्तनं द्विमुखमिति शंसितम्, तथा परिवर्तनस्यान्यः प्रकारोऽपि द्विमुखः, यस्य वृद्धिरेकं मुखं क्षयश्चापरम्। अनधिगतस्याधिगमो वृद्धिः; अधिगतस्यापगमश्च क्षयः। तेन यथा सम्+कृत>संस्कृत इत्यत्र मूलशब्दे असतः स-स्य प्रवेशेन वृद्धिर्भवति, तथा भोस्+देवाः>भो देवाः इत्यत्र सतः स-स्य लोपेन क्षयो भवति। वृद्धिर्यस्य क्वचिद् विकासः, क्षयस्तस्यान्यत्र ह्रासः। उदाहरणानि—

वृद्धिः —

पर+पर>परस्पर; डमरु>डम्बरु (ओ.); श्वन्: hound; mancyn (man kin) (प्रा. इं.)>mankind—अत्र स-ब-दा नां वृद्धिः।

क्षयः —

स्तृ (वै.)>तारा; स्थग, stigus (लि.) : tegere (लै.), deckens (ज., डा.), thatch; निम्ब>नीम (हि.); bomb : बोमा(ओ); चन्दन>चन्न (प्रा. ओ.); andsware (प्रा. इं.)>answer - अत्र स ब-दा-नां क्षयः।

वृद्धिक्षयावपि आंशिकौ भवतः। यथा—

आंशिकी वृद्धिः —

वत्स>वथ्स[10]; पुत्र : पुथ्र (जे.); तुज : thoulen (ग.); तनु : thin - अत्र महाप्राणांशस्य ह-स्य वृद्धिः।

आंशिकः क्षयः —

छुच्छुन्दरि>चुचुन्द्रा (ओ.); बन्ध्: binden (प्रा.इं.), bind; धन्धा (हि.) : धन्दा (ओ.) - अत्र छ-ध-तो महाप्राणांशः क्षयं गतः।

संस्कृते यदा धातोर्द्वित्वं भवति, तदा अभ्यासगतानां (द्वित्वे द्वे समाने रूपे भवतः। तयोः प्रथमं रूपम् अभ्यासः इति पाणिनीयव्याकरणे संज्ञितम्[11]) पाणिनिसूत्रानुसारेण वर्ग्यमहाप्राणानां स्थाने संपृक्ता अल्पप्राणाः

---

१०. द्र. चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम् - सि. कौ.
( १३० सूत्रस्थम् )

११. पूर्वोऽभ्यासः - अष्टा. (६।१।४)

भवन्ति[12]। यथा-भूव् भूव् अ (असि.)>बभूव; धा धा औ (असि.)>दधौ; ढौक् ढौक् ए (असि.)>डुढौके; छिद् छिद् अ (असि.) >चिच्छेद। एतान्यपि क्षयस्योदाहरणानि।

व्याकरण - भाषाविज्ञान - प्रचलितौ आगमलोपशब्दौ परित्यज्य तत्स्थानेऽत्र वृद्धिक्षयशब्दयोः प्रयोगे हेतुस्तावत् वृद्धिक्षयार्थगता आपेक्षिकी व्यापकता। अत्र हि व्याकरणोक्तानि आगम - गुण - वृद्धि – दीर्घ – सम्प्रसारणानि वृद्धितत्त्वयोगात् वृद्धिनाम्ना व्यपदिष्टानि, पूर्व-पररूप-ह्रस्व-लोपाश्च क्षयनाम्ना। वर्ग्याल्पप्राणे महाप्राणांशवृद्धौ जायमानो महाप्राणवर्णो वृद्धिनाम्ना, तत्र महाप्राणांशक्षयाज्जायमानोऽल्पप्राण-वर्णश्च क्षयनाम्नाऽभिहितः। तेन क>ख इति वृद्धेः, ख>क इति च क्षयस्य परिसरमायाति। एतच्च समर्थ्यते kh, k इति h-मिश्रितामिश्रिताभ्याम् इङ्ग्लिशलिपिलेखाभ्याम्। शौनकोऽत्र ख-छ-ठ-थ-फे-षु विसर्गांशस्य, घ-झ-ढ-ध-भे-षु च हकारांशस्य स्थितिं शंसति[13]। व्याकरणभाषाविज्ञानयोः महाप्राणाल्पप्राणशब्दाभ्यामेव एषां पार्थक्यपरिचयः। तन्त्रोक्तसंकोचन-[14] गता य-व-र-ला अपि अत्र क्षयपरिसरेऽन्तर्भाविताः। आगमलोपशब्दावेतानि सर्वाणि तत्त्वानि प्रकाशयितुमक्षमौ। इत्थं सन्दर्भप्रतिपादितसकलविषये अव्याप्तिं दृष्ट्वा एतत्सकलव्याप्त्यर्थं वृद्धिक्षयशब्दौ कल्पितौ। तथापि आदेश-वर्णविकारागमलोपशब्दा बहुप्रचलनदृष्ट्याऽस्मिन् सन्दर्भे यत्र तत्र प्रयुक्ताः।

---

१२. अभ्यासे चर्च – तत्रैव (८।४।५४)

१३. सोष्मतां सोष्मणामूष्मणाहुः
सस्थानेन घोषिणां घोषिणैव। (ऋ.प्रा.) (१३।५)

१४. यद्वर्णपञ्चकमपूर्वकमादिवर्ग्य-
मन्तस्थतां भजति सङ्कुचिते तदीषत्।
तत् कादिवर्गतनु संकुचितं नितान्त-
मूष्मात्मकं च दधतेऽङ्कुरिताभिपूर्ति—मातृकाचक्रविवेकः
(संस्कृतभाषाविज्ञानस्य ५५तम पृष्ठे उद्धृतः)

एतत्तत्त्वत्रयं सकलवस्तुसाधारणम् । एको चिन्ताधारां परित्यज्य मानवोऽपरामधिगच्छति, शैशवे गच्छति काले दन्तांल्लभते, दृष्टिशक्तिं च वार्धक्ये जहाति । एवमादिषु यथाक्रमं विनिमयवृद्धिक्षयतत्त्वानि अवलोक्यन्ते ।

## १४. श्रुतिस्तराः

अत्रोदाहृता वर्णा विनिमयवृद्धिक्षयाणामन्तिमस्तराः । एतत्स्तर-प्राप्तेः पूर्वं बहवः स्तराः सन्ति, ये केवलमुच्चारणेनाभिव्यज्यन्ते । लैतिन्-भाषागतः सकारो मध्यवर्तिस्तरानतिक्रम्य प्रथमं ज(z) - रूपेणाविर्भूय क्रमशो र-रूपमधारयत्—T. Hudson Williams- कथितमिदं[१५] स-ज-योः ज-र-योश्च मध्ये स्तराणां सत्तां सङ्केतयति । इत्थं दद्रु>जादु (ग्री.)- इत्यादिषु विनिमयस्तराणां द-जा-दीनां मध्ये, प्रविश्>पैस (हि.) इत्यादौ पादीनां तद्वृद्धिस्तराणां फादीनां च मध्ये, हरयिह>हरइह इत्यादिषु यादीनां तत्पूर्णक्षयस्य लोपस्य च मध्ये बहवः स्तरा भवन्ति ।

एषां स्तराणां लिपिरूपं न विद्यते । तेन वर्णोच्चारणे यावन्तः स्तरा अभिव्यज्यन्ते, ते सर्वे लिप्या प्रकाशयितुं न शक्यन्ते । शास्त्रवर्णिता ईदृशा उच्चारणस्तरास्तावत्—

---

१५. Latin intervocalic 's' did not suddenly become 'r', but passed through a series of intermediate stages, 's' gradually assumed more and more voice, that is vibration of vocal chords as explained in the chapter of sound until it became 'z' and in course of time 'z' became 'r'. In Oscan and Italic dialect, closely related to Latin, the process stopped half way V+S+V=V+Z+V, eg. 'egmuzum' from an earlier 'egmosom'—A Short Introduction to the Study of the Comparative Grammar (Indo-European) (Chap. 1, P, 3-4)

(क) प्रातिशाख्यवर्णिता स्वरभक्तिः — एकमात्रातोऽन्यूनस्य स्वरस्य भग्नांशभूताया यस्या उच्चारणं क्वचिदर्धमात्रया, क्वचिद्वा पादार्धमात्रया भवति[१६],

(ख) स्वरहीनं व्यञ्जनम्— सर्वसम्मतशिक्षायां यस्योच्चारणमणुमात्रकमिति शंसितम्[१७],

(ग) य-वौ —ययोरुच्चारणं लेशरूपेण प्रातिशाख्ये, लघुप्रयत्नतररूपेण च पाणिनीयव्याकरणेऽनुशिष्टम्[१८],

(घ) feel, heart - प्रभृतिशब्दगतौ ल-रौ— यौ खलु अर्धमात्रोच्चारितल-रा-पेक्षया न्यूनमात्रयोच्चार्येते इति Otto Jesperson - Daniel Jonesयोः सम्मतम्[१९],

(ङ) they - ray - know - bow - प्रभृतिशब्दगतौ य-वौ-यौ साधारणय-वा-पेक्षया न्यूनमात्रकौ,

---

१६ रेफादूष्मणि स्वरपरे स्वरभक्तिरकारस्यार्धं चतुर्थमित्येके । अन्यस्मिन् व्यञ्जने चतुर्थमष्टमं वा —अथर्वप्रातिशाख्यम् (अ. प्रा.) (१।१०१- १०२)

१७. अस्वरं व्यञ्जनं नित्यमणुमात्रं प्रकीर्तितम् (१।१५) (Critical Studies of the Phonetic Observations of Ancient Indian Grammarians-धृता) ।

१८. क) लेशो वात्सप्रस्यैतयोः - तै. प्रा. (१०।२३)

ख) व्योर्लघुप्रयत्नतरः शाकटायनस्य—अष्टा. (८।३।१८)

१९. क) R. when not followed by a vowel is either frankly a vowel ( as in here ) or nothing at all ( as in heart etc. ) —Growth and Structure of the English Language (Sect. 3, Chap. 1, P. 2)

ख) Thus 'clear'l is used in leave......while 'dark' l is used in feel— An Outline of English Phonetics (Sect. 659, Chap. 29, P. 173)

च) मौलिकस्वररूपेण भाषाविज्ञाने गृह्यमाणानाम् e ē ā ō इति चतुर्णाम् अ-इ-उ- इति त्रयाणां वा ह्रासरूपम्—यत् खलु 'ə' इति लिख्यते[२०]।

एतेषु ये स्वराः पूर्णस्वरव्यञ्जनरूपमप्राप्तास्ते सर्वे लघूच्चारणाः। एषु हि उच्चारणकालमात्रा स्वरव्यञ्जनार्थं निर्दिष्टायास्तत्तत्कालमात्राया ऊना भवति। अतः सौकर्यार्थमेते सर्वे श्रुतिस्वरनाम्ना व्यपदिश्यन्ते।

## १५. वर्णानां स्वरक्रमः

वृद्धिक्षयाभ्यां वर्णानां कतिचित् स्वरा भवन्ति, येऽत्र कोष्ठके विन्यस्यन्ते। ते यथोत्तरं वृद्धिस्वरा भवन्ति। सर्व एव वर्णा अनित्यतावादे प्रागभावप्रतियोगिन इति प्रथमं प्रागभावाख्योऽनुच्चारणस्वरो दत्तः यः खलु नित्यतावादे अव्यक्तस्वरः। एतत्स्वरार्थमत्र 'X' इति चिह्नं कल्पितम्। ततः परं श्रुतिः। साधारणवर्णमात्रापेक्षया किञ्चिदूना बहव उच्चारणस्वरा वर्तन्ते येऽत्र सौकर्यार्थं श्रुत्याख्य एक एव स्वर इति व्यपदिश्यन्ते। अस्य स्वरस्य चिह्नम् '√' इति कल्पितम्। ततोऽर्धमात्राकाल्पप्राणस्वरोऽल्पप्राणव्यञ्जनार्थं कल्पितः। अत्र अघोषा अननुनासिकघोषा अनुनासिकघोषाश्चेति त्रिविधा वर्णा उच्चावचभावेन विन्यस्ताः स्वस्वोच्चारणे यथाक्रमं

---

२०. क) The base vowel e ē ā ō were weakened in all syllables which had but a slight accent or no accent at all. In the latter case, the radical vowel was lost without leaving auy trace, but in syllables with a slight accent e was reduced to ə, ē to e or ə, ō to o or ə—Manual of the Sanskrit Phonetics (P. 10)

ख) Thus a - i - u of the endings were levelled in the colourless vowel ।ə। and this could even after sometimes be dropped altogether in most cases—Growth and Structure of the English Language (Sect. 189, Chap. 9, P. 169)

स्वरयन्त्रस्य (१) स्वाभाविकस्थितिं (२) तस्य विकृतिं (३) तद्-विकृत्या सह वायोर्मुखनासिकोभयमार्गगतिं च शंसन्ति । एतत्स्तरानन्तरं क्रमशो महाप्राण-ह्रस्व-दीर्घ-गुण-वृद्धि-स्तराः । एते व्युत्क्रमेण क्षयस्तरा भवन्ति । वृद्धौ यः प्रागभावस्तरः, स क्षये लोपाख्यः प्रध्वंसाभावस्तरो भवतीति विशेषः । तत्र अभावश्रुतिस्तरौ सर्वेषामेव वर्णानां वर्तेते । इतरस्तरेषु केचिदेव वर्णानां भवन्ति । यथा—

## कोष्ठकम्—१

### वर्णस्तरक्रमः

| वर्णाः | अभावः | श्रुतिः[1] | अर्धमात्राकाल्पप्राणाः: अघोषाः | घोषाः: अननुनासिकाः | घोषाः: अनुनासिकाः | महाप्राणाः: अघोषाः | महाप्राणाः: घोषाः | ह्रस्वाः | दीर्घाः | गुणाः | वृद्धयः |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | × | ✓ | | | | | | अ अँ | आ आँ | | |
| इ | × | ✓ | | य | यँ | | | इ इँ | ई ईँ | ए एँ | ऐ ऐँ |
| उ | × | ✓ | | व | वँ | | | उ उँ | ऊ ऊँ | ओ ओँ | औ औँ |
| ऋ | × | ✓ | | र | | | | ऋ ऋँ | ॠ ॠँ | अर् | आर् |
| ऌ | × | ✓ | | ल | लँ | | | ऌ ऌँ | ॡ ॡँ | अल् | आल् |
| क | × | ✓ | क | ग | ङ | | घ | | | | |
| च | × | ✓ | च | ज | ञ | छ | झ | | | | |
| ट | × | ✓ | ट | ड | ण | ठ | ढ | | | | |
| त | × | ✓ | त | द | न | थ | ध | | | | |
| प | × | ✓ | प | ब | म | फ | भ | | | | |
| श | × | ✓ | | | | श | | | | | |
| ष | × | ✓ | | | | ष | | | | | |
| स | × | ✓ | | | | स | | | | | |
| ह | × | ✓ | | | | | ह | | | | |

अत्रोक्तो दीर्घ लृकारो व्याकरणे निराकृतोऽपि तन्त्र प्रातिशाख्ययोः स्वीकृतः[२१]।

स्वरक्रमकल्पना भाषाविज्ञाने केनचित्प्रकारेणोपलभ्यते; किन्तु व्यञ्जनक्रमकल्पना नास्ति। अत्र वर्ग्यव्यञ्जनक्रमो नूतनतयोपनिबद्धः। क्रमिकीमधिकाधिकां विकृतिमाधारीकृत्य कल्पनेयं कृता।

अनुच्चारणवेलायां श्वासो नासिकया निर्गच्छति। इयं हि प्रकृतिः। तत्र एकैकविकृतावनुस्वार-विसर्गावुच्चार्येते। अनुस्वारार्थं हि केवलं स्वरयन्त्रस्य, विसर्गार्थं च केवलमधिजिह्वाया विकृतिरपेक्ष्यते। वर्णान्तरोच्चारणार्थं न्यूनतया विकृतिद्वयमावश्यकं भवति। वर्ग्यवर्णेषु केवलं प्रथमवर्णानामुच्चारणार्थं द्वे विकृती अपेक्ष्येते—प्रथमतोऽधिजिह्वायाः स्वाभाविकस्थितौ विकृतिरुत्पन्ना सती श्वासं मुखविवरेण विसृजति, ततश्च मुखविवरमार्गेण तथा निर्गच्छन् वायुप्रवाहस्तत्तदुच्चारणस्थानेषु करणेन (जिह्वया ओष्ठेन वा) क्षणमवरोधात् गतौ विकृतिं लभते। यदा एतद्विकृतिद्वयात् पूर्वं स्वरयन्त्रेऽपि विकृतिर्जायते, तदा तृतीयवर्णा उच्चार्यन्ते; यदा तु प्रथमवर्णोचितेन विकृतिद्वयेन साकं वायोः परिमाणे[२२] मतान्तरे च वेगे[२३] आधिक्यरूपा विकृतिर्जायते, तदा द्वितीयवर्णा भवन्ति। इत्थं तृतीयेषु द्वितीयेषु च वर्णेषु विकृतित्रयसत्वात् विकृतिद्वयनिष्पन्नेभ्यः प्रथमवर्णेभ्यः परमेव तेषां स्थितिः कल्पिता। तत्र च तृतीयवर्णाः प्रथमवर्णानां विनिमयरूपा एव, न तु वृद्धिरूपा इति हेतोस्ते प्रथमवर्णैः साकमेकत्रैव प्रथमस्तरे विन्यस्ताः। द्वितीयवर्णास्तु महाप्राणांशवृद्ध्या जाता इति वृद्धिरूपत्वात् तत्सूचके पृथक्स्तरे निवेशिताः।

---

२१. क) एतद्वर्णचतुष्टयमुभयेच्छाधारित्वान्नपुंसकम् - ऋ ॠ लृ ॡ इति —तन्त्रसारः (त. सा.) (आ. ३, पृ. १२)

ख) शु. य. प्रा. (८।२२)

२२. महति वायौ महाप्राणः—आपिशलशिक्षा (आ. शि.) ८।१६

२३. शीघ्रतरं सोष्मसु प्राणमेके - ऋ प्रा. (१३।१६)

तृतीयवर्णानां पुनरपि द्विधा परिवर्तनं जायते— विनिमयो वृद्धिश्च । पूर्वोक्तविकृतित्रयेण सार्कं (१) वायोर्नासिकाविवरगमनरूपाया-मधिकतायां तृतीयवर्णानां पञ्चमवर्णरूपेण विनिमयो जायत इति एषु विकृतिचतुष्टयम्, (२) प्राणाधिक्ये तु चतुर्थवर्णा जायन्ते इति अत्रापि विकृतिचतुष्टयम् । परन्तु पूर्वनिर्दिष्टनीत्या पञ्चमवर्णाः एकस्मिन्नेव स्तरे प्रथमतृतीयवर्णेभ्यः परं सन्निवेशिताः । द्वितीयवत् चतुर्थवर्णाश्च पृथक्स्तरे । प्रथमद्वितीययोः, प्रथमतृतीययोः, तृतीयपञ्चमयोः, तृतीयचतुर्थयोः, द्वितीयचतुर्थयोश्च प्रत्यक्षसम्पर्कं तत्तत्स्तरेषु च पौर्वापर्यं प्रदर्शयितुमूर्ध्वाधः क्रमपौर्वापर्यक्रमयोः समन्वयात्मकेन क्रमेण वर्णसज्जा विहिता । यथा—

क ——— ख
ग ——— घ
ङ

आधुनिकवर्णविज्ञानम् ए-ओ-अर्-अल् इति सबलस्तरान्, ऐ-औ-आर्-आल् इति वर्धितस्तरान् मन्यते । ई-ऊ ॠ-लॄ-इ उ-ऋ-लृ इति दीर्घह्रस्वस्तरान् य-व-र-ल इति अर्धमात्रकस्तरांश्च दुर्बलस्तरान् मन्यते, श्रुतिस्तरान् न पृथग् गणयति, भारतीयसिद्धान्ते इ-उ-ऋ-लृ इति साधारण-स्तराः, ए-ओ-अर्-अल् इति ऐ-औ-आर्-आल् इति च गुणवृद्धिस्तराः, इतरे च दुर्बलस्तरा इति कथयति । ईदृशा विचाराः Taraporewalla—Gesperson-प्रभृतीनां लेखेषु प्रतिफलिताः[२४] ।

---

२४. क) Vowel- gradation is approached by Sanskrit Grammarians and by Modern Western Scholars. The farmers look upon the 'weak grade' as the original and describe two other steps as successive strengthenings (i.e. वृद्धि) and one step downwards for weakening (simple vowel and सम्प्रसारण)— Elements of the Science of Language (Section 138, P. 283)

ख) This being so, it becomes impossible to consider 'lip' the original root form which in 'loip' and 'lip' has been extended and the new theory of apophony thus dispcses

वस्तुतस्तु एते स्वरा आनेक्षिकाः। भाषातत्त्वदृष्ट्या विकास-ह्रासयोरिमान् स्वरान् सर्वदैव विकासस्य ह्रासस्य वा स्वररूपेण बद्धान् कर्तुं न शक्यते। कस्यांचित् परिस्थितौ यो विकासस्वर इति विविच्यते, स परिस्थित्यन्तरे ह्रासस्वरोऽपि भवितुमर्हति । यथा- सुद्यो>सुद्यु, पूञ्>पुनाति इत्यादौ पाणिनिव्याकरणे कृतो ह्रस्व[२५] उकारं ह्रासस्वर-रूपेण प्रतिपादयति, विद्वस्>विदुषः इत्यत्र व-स्थाने संप्रसारणेन विहितः स एव उकारः[२६] विकासस्वरं सूचयति ।

यदि एषां स्वराणां कस्मिंश्चित् प्रकारे वृद्धेः क्षयस्य वा विषयता नास्ति, तर्हि अनुभयरूपत्वात् स उदासीनस्वररूपेण व्यपदेश्यः। यथा—उत्कलः। नात्र वृद्धिर्न वा क्षय इत्यनुभयरूपोऽयम् ।

## १६. स्वीकृतं परिवर्तनं दोषाय न भवति ।

परिवर्तनं खलु भाषाणां जीवातुः । परिवर्तनात् खल्विमा भाषा जायन्ते, परिवर्तनेन जीवन्ति, परिवर्तनेन भाषान्तरं सृजन्ति, स्वयमपसरन्ति च ।

यदा भाषायां किञ्चिद्रूपं प्रचलति, तदा रक्षणशीलास्तदेव रूपमाद्रियन्ते, तस्यैव रूपस्य परिवर्तनं यथा न स्यात्तथा स्वयं चेष्टन्ते,

---

of the old theory, based on the Indian Grammarians' view that the shortest form was the root-form, which was then raised through गुण and वृद्धि। This now is reversed, and the fuller form is shown to be the oldest, which in some cases was shortened according to a process parallaled in many living languages— Language, Its Nature, Development and Origin (Section 2, Chap. 4, P. 92)

२५. ह्रस्वो नपुंसके प्रातिपदिकस्य, एच इग्घ्रस्वादेशे, य्वादीनां ह्रस्वः —अष्टा. (१।२।४७, १।१।४८, ७।३।८०)

२६. वसोः संप्रसारणम्—तत्रैव (६।४।१३१)

अन्यांश्च प्रभावयन्ति । ते किञ्चित् परिवर्तनं दृष्ट्वा प्रबलं विरुन्धन्ति, शब्दं परिवर्त्य वदतश्च गुणहीनान् मन्यन्ते । एषामियं चिन्ताधारा भर्तृहरेरुक्तौ प्रतिफलिता[२७] । यत्र विरोधः सबलो भवति, तत्र तत् परिवर्तनमगृहीतं भवति, विरोधस्य दुर्बलत्वे तु गृहीतमेव भवति । परिवर्तनशीला भाषा तेषामीदृशं प्रयत्नमवमत्य प्रायशः परिवर्तिता भवत्येव । ये जनाः प्रथमतः परिवर्तनं कुर्वन्ति, ते रक्षणशीलानां घृणापात्राणि भवन्ति । तस्मिन् परिवर्तने कालक्रमेण बहुभिर्गृहीते रक्षणशीलानां घृणामात्रा न्यूनीभूय क्रमशः पूर्णतयाऽपगच्छति । तथापि तेषु केचित् प्राचीनं रूपं न परित्यजन्ति, किन्तु प्राचीनमर्वाचीनं च रूपं वैकल्पिकभावेन प्रयुञ्जते । यथा—भ्रुवा कुंसो यस्य स भ्रूकुंस इति प्रकृतिसिद्धं रूपम् । कालान्तरे विषमीभाव-महिम्ना ऊकारस्य अकाररूपेण परिवर्तने भ्रकुंस इति जातम् । तच्चाधुना भ्रूकुंसस्य विकल्परूपभावेन प्रयुज्यते । षट्सन्त इत्यस्य स्थाने षट्त्सन्त इति केचिदुच्चारयाम्बभूवुः । तदपि संस्कृते गृहीतम् । इत्थं हरायिह इत्यस्य स्थाने हर इहेति विकल्पितम् ।

क्वचित् त एव रक्षणशीलाः स्वयमपि मूलशब्दं विहाय परिवर्तितं शब्दं व्यवहरन्ति । तेन तत्काले प्राचीना अयस्मय (वै.) प्रभृतयः शब्दाः परित्यक्ताः, 'अयोमयः इत्यादयश्च तत्स्थानापन्नाः । एवमागमसहितो 'बोभवीतु' इत्येव साम्प्रतं संस्कृते साधुः, न तु बोभोतु (वै.) इति । तथा दुहे इत्यागमरहित एव साधुः, न तु दुह्ल (वै.) इत्यागमसहितः ।

नी+त्र>नेत्र, पत्+त्र>पत्त्र - अनयोस्तुलनया ज्ञायते यत् नी-धातौ तकाराभावात् त्रप्रत्यये एकतकाररूपं भवति; परन्तु पत्-धातोस्तकारेण सह त्रप्रत्ययगततकारस्य योगात् तत्र द्वितकारकं रूपं भवति । एवं सत्यपि अद्य संस्कृते एकं तकारं विलुप्य बहवः पत्रमिति लिखन्ति, यन्नैव व्याकरणसम्मतम् । ईदृश्यां परिस्थितौ व्याकरणमनादृत्य पत्रशब्दो ग्राह्यः । व्याकरणं हि भाषामनुगच्छति, न तु सा तत् । अत्र रक्षणशीलानां विरोध उपेक्ष्यः ।

२७. पारम्पर्यादपभ्रंशो विगुणेष्वभिधातृषु—वाक्यपदीयम् (१।१५५)

न केवलं भाषाक्षेत्रे, अपि च सर्वत्रैव रक्षणशीलानां विरोधः प्रथमपरिवर्तनकाले प्रवर्तते, पश्चात्तु बहुत्र स मन्दमन्दतरीभूय क्रमशोऽपगच्छति। वस्त्रपरिधान-खाद्यप्रस्तुत्यलङ्कारादिषु पुरुषानुक्रमेण परिवर्तनानि विधीयन्त एव। तेषु सर्वेष्वप्ययं प्राथमिकविरोधः प्रादुर्भवति। क्रमशश्च रक्षणशीलैरपि तानि विना विरोधं गृह्यन्ते, निर्दोषाणि च मन्यन्ते।

एवंभूतानां परिवर्तनानां ग्रहणात् प्रतिवर्षदशकं जर्मनी-फ्रेञ्च-भाषयोर्नूतनं व्याकरणनिर्माणं विलोक्य Taraporewalla - भद्रः सर्वास्वपि भाषासु तादृशनूतनव्याकरणसृष्टिमावश्यकीं मेने[२८]।

इत्थं स्वीकृतं परिवर्तनं नैव दोषाय भवति, अस्वीकृतं तु दोषायैवेति निर्यासः। तेन ये उच्चारणदोषा ऋक्प्रातिशाख्ये परिसंख्यातास्ते वैदिकभाषागृहीतपरिवर्तनविषयका न भवन्ति, किन्तु अगृहीतपरिवर्तन-विषयकाः। ऋक्प्रातिशाख्ये निगदिता आयापायव्यथनाख्यास्त्रयो दोषाणां भेदा[२९] यथाक्रमम् अगृहीतेभ्यो वर्णागमलोपविकारेभ्योऽभिन्नाः। ज्यायान्+च>ज्यायाँश्च (वै.) (शु. य. सं. ३१।३) इत्यत्र श-कारस्यागमे, पादः + अस्य>पादोऽस्य (वै.) (शु. य. सं. ३१।३) इत्यत्र अ-स्य लोपे, पश्चात्+भूमिम्>पश्चाद्भूमिम् (वै.) (शु. य. सं. ३१।५) इत्यत्र त-स्य द-त्वेन विकारे एते दोषा न प्रवर्तन्ते, तदानीम् एतेषां गृहीतत्वात्।

यानि चागृहीतपूर्वाणि परिवर्तनानि ऋक्प्रातिशाख्ये दोषरूपेण विवेचितानि, तानि च कियत्कालानन्तरं तत्परिवारगतभाषासु गृहीतानीति

---

२८. Hence, too, the need of issuing authoritative grammars of various languages from time to time. France and Germany have been doing this once in about ten years and it would be a great service if all important languages were treated similarly— Elements of the Science of Language (Sect. 67, P. 190)

२९. तदायापायव्यथनानि दोषाः (१४।१)

दोषरूपेण तेषां गणना न भवति । दिङ्मात्रमुदाह्रियते :—

१) वैदिक - त-थ-योः स्थाने सकारोच्चारणं व्यथनदोषदुष्टत्वेन निषिद्धम् ऋक्प्रातिशाख्ये[३०] । तद् (वै.)>सः (वै.) इत्यत्र त-स्थाने सो गृहीतपूर्वत्वान्न दुष्टः । रथ्यो ना पृथिवी (ऋ. सं. १।२२।१५) इति मन्त्रे 'पृसिवी' इति पाठे स दोषो लगत्येव, तादृशपरिवर्तनस्य ऋक्प्रातिशाख्य-कालेऽगृहीतपूर्वत्वात् । परवर्तिनि काले एतत्परिवारगतासु भाषासु त-थ-योः स्थाने स-स्य प्रयोगः क्रमशः स्वीकृतः । यथा-दधाति : dedosi(ग्री.) नक्तम् : nax (लै.); शत्रु : hass (ज.) ; वर्ती : brush; strata (लै.)> strasse (ज.); hath (प्रा. इं.)>has ।

२) आय(वर्णागम)विषयेऽपीयमेव रीतिः । यथा-मास (वै.)> मांस (वै.) । अत्र अनुस्वारागमस्तत्कालेऽनुमोदितत्वान्न आयदोषदुष्टः । अननुमोदितोऽनुस्वारागमस्तु ऋक्प्रातिशाख्योक्तरीत्या[३१] अनुनासिक-दोषदुष्टः । परवर्तिभाषासु इमं दोषमनादृत्य अनुस्वारागमो विहितः, पुनः परिवर्तनेन च सोऽनुस्वारो वर्ग्यपञ्चमीकृतः । यथा—दर्शन>दंसण (म.प्रा.); स्पर्श>फंस (म. प्रा.); कर्पूर : campher; शत : cent; पक्ष>पंख (हि.); नग्न>नङ्गला (ओ.); तखणे (पालि)>तंखणे (पालि); तोटि (ओ.)> तण्टि (ओ.) ।

३) अ-आ-लोपो निषिद्ध ऋक्प्रातिशाख्ये[३२] । किन्तु वैदिक-भाषायां गृहीतपूर्वः[३३] 'वातजूतो यो अभिरक्षति त्मना'-(ऋ सं. १० १७०।१) इत्यत्र आत्मना इति शब्दस्य आ-लोपो नैवापायदोषदुष्टः । एवम् 'असौ यस्ताम्रो अरुणः (शु. य. सं. १६।६) इति मन्त्रे असौ इत्यस्य अ-लोपे

३०. दन्त्यान् सकारोपनिभानघोषान्
रथ्या पृथ्वी पृथिवी त्वा पृथीति । (१४।१२)

३१. नासिकयोस्त्वनुसङ्गेऽनुनासिकम् —तत्रैव (१४।३)

३२. ग्रासः कण्ठ्ययोः—तत्रैव (१४।४)

३३. द्र. मन्त्रेष्वाङ्यादेरात्मनः—अष्टा. (६।४।१४१)

दोष एव स्यात् । किन्तु 'परकाले अवगाहः>वगाहः[३४], अपिधानम्> पिधानम्, अरण्य>रण्ण[३५] (म. प्रा.) इत्यादौ अलोपः शिष्टैर्गृहीत इति न दोषः ।

इत्थं यत्र प्राचीना दोषं पश्यन्ति, अर्वाचीनास्तत्र क्वचिद्दोषाभावं गृह्णन्तीति सार्वत्रिको नियमो वर्णपरिवर्तनपरिसरमप्यालिङ्गति ।

## १७. आगमलोपादिषु वृद्धिक्षयतत्त्वम्—

दीर्घ-ह्रस्वादिषु वृद्धिक्षयतत्त्वं दृष्ट्वा ते वृद्धिक्षयनाम्ना व्यपदिष्टा इत्युक्तम् । सम्प्रति तत् परीक्ष्यते ।

**आगमो लोपश्च—**

प्रकृतिप्रत्यययोः कस्मिंश्चिद्देशे पूर्वमसतो वर्णस्य प्रवेश आगम इति कथ्यते । यथा—सम्+कृत>संस्कृत । अत्र स-स्य आगमः । अनधिगताधिगम-लक्षणायां वृद्धावयमन्तर्भवति । लोपोऽपि अधिगतापगमलक्षणः प्रसक्ता-दर्शनलक्षणो वा क्षय एव ।

दीर्घः —

अ-इ-उ-ऋ-समीपे यथाक्रमम् अ-इ-उ-ऋ - इत्येषामवस्थाने पूर्वपरयोः स्थाने आ-ई-ऊ-ॠ-इति दीर्घा भवन्ति । यथा—दैत्य+अरि> दैत्यारि, अति+इन्द्रिय>अतीन्द्रिय; विष्णु+उदय>विष्णूदय; होतृ+ ऋकार>होतॄकार । अत्र एकमात्राविशिष्टौ द्वौ ह्रस्वस्वरौ द्विमात्राविशिष्टम् एकं दीर्घत्वं प्राप्नुत इति न्याय्यमेतत् । किन्तु अत्र (वै.)>अत्रा (वै.), परिरम्भ>परीरम्भ, तु (वै.)>तू (वै.), पितॄन् (असि.)>पितृन्-इत्यादौ एको ह्रस्वः केन प्रकारेण दीर्घो भवतीति भाषाविज्ञानिनां शङ्का स्यादेव । सा च तत्र सजातीयस्वरागमकल्पनया समाधेया । तथाहि 'अत्र' इत्यत्र अ इत्यागमे 'अत्र अ' इति जाते सन्धौ दैत्यारिः इतिवद्दीर्घो भवति ।

---

३४. वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः । —सि. कौ. (१५३ सूत्रस्थम्)

३५. लोपोऽरण्ये—प्रा. प्र. (२।४)

एवमन्येष्वप्यूह्यम् । दशरथ>दाशरथि इत्यादौ व्याकरणेन वृद्ध्या विधीयमान आकारोऽपि[३६] प्रागुक्तरीत्या आगमपूर्वक इति कल्पनीयम्। आगमस्य वृद्धिभावेन व्यपदेशादत्र वृद्धितत्त्वं विद्यते । उलूक : ūle (प्रा.इं.), उल्व : ūla (लि.) इत्यादिष्वपि वृद्धिरियं सममेव प्रवर्तते। beauty (ब्यूटि) इत्यत्र उकारस्य दीर्घोच्चारणमपि उच्चारणे वृद्धितत्त्वं सूचयति ।

यत्तु हरिद्रा+आभ> हरिद्राभ इत्यादौ द्विमात्रकयोर्द्वयोर्दीर्घयोः स्थाने द्विमात्रक एको दीर्घो व्याकरणे विधीयते, यच्च हरिद्रा+अर्थ> हरिद्रार्थ, गृह+आदि>गृहादि इत्यादौ एको द्विमात्रक आकारः एकश्च एकमात्रः अकारो मिलित्वा एको द्विमात्रक आकारो भवतः, न तु त्रिमात्रक आकार इति तत्र कथ्यते, तदुभयं भाषाविज्ञानदृष्ट्या न समञ्जसमिति प्रतिभाति । तत्र द्विमात्रको दीर्घोऽवशिष्यते, इतरमात्रालोपश्च भवतीति कल्पनीयम् । तस्मात् क्षयोदाहरणमेतत् ।

ह्रस्वः —

कालीदास> कालिदास, विदुषीब्रुवा (असि.)>विदुषिब्रुवा । दीर्घस्थाने ह्रस्वेन निष्पन्नानामीदृशानां शब्दानां निष्पादनप्रणाल्यां तात्त्विक-दृष्ट्याऽनुध्यातायामिदं प्रतिभाति यत् - तत्र द्विमात्रिकाद्दीर्घात् एकमात्रा-वियोगे शिष्टा एकमात्रा ह्रस्वोच्चारणस्य हेतुरिति । अत इदमांशिक-क्षयस्योदाहरणम् । ऊधस् : udder इत्यादौ look, book इत्यादीनां लुक्, बुक् इत्यादिषु औच्चारणिकरूपेषु च दीर्घस्य आंशिकः क्षयः कल्पनीयः ।

सुस्मृते>सुस्मृति[३७], सैन्धव>सिन्धव[३८] (म. प्रा.), चित्रगो> चित्रगु[३९], सौन्दर्य>सुन्देर[४०] ( म. प्रा. ) इत्यादौ ए-ऐ-स्थाने जायमान

---

३६. तद्धितेष्वचामादेः - अष्टा. (७।२।११७)

३७. पा. टी. २।२५

३८. इत् सैन्धवे —(प्रा. प्र.) (१।३८)

३९. गोस्त्रियोरुपसर्जनस्य - अष्टा. (१।२।४८)

४०. उत् सौन्दर्यादिषु - प्रा. प्र. (१।४४)

इः, ओ-औ-स्थाने च जायमान उः दीर्घस्वरस्य अंशक्षयं सूचयतः । एवम् ei (ग्री.) > e, i (लै); oi (ग्री.) > i (लै. प्रथमाबहुवचने); ou (ग्री.) > u (लै.)- इत्यादिकमत्रोदाहर्तव्यम् । sir birth-mirth-confirm-प्र भृतिषु 'i' इत्यस्योच्चारणम् 'अाकार'वद् भवतीति अंशक्षयोदाहरणमेतत् ।

पूर्वरूपं पररूपं च—

हरे + अव > हरेऽव इत्यादौ अकारस्य पूर्वरूपत्वम्[४१], प्र + एजते > प्रेजते इत्यादौ च पररूपत्व[४२] पाणिनिव्याकरणे यदनुशिष्टम्, तत्रापि स्वरलोपात्मकः क्षयो भवतीति कल्पना रुचिरा स्यात् ।

सम्प्रसारणम्—

य-व-र-ल-स्थाने यथाक्रमं जातानाम् इ-उ-ऋ-ऌ- इत्येषां सम्प्रसारणसंज्ञा[४३] पाणिनिना विहिता, सम्प्रसारणात् परस्य स्वरस्य च पूर्वरूपत्वमनुशिष्टम्[४४] । यथा—यज् > इष्ट; वच् > उक्त; भ्रस्ज् > भृज्जति । अत्र अर्धमात्रातोऽनधिकानां व्यञ्जनानां स्थाने एकमात्राविशिष्टाः स्वरा जायन्त इति सम्यक् प्रसारणादेषां सम्प्रसारणसंज्ञा युक्ता । इदं च वृद्धिमध्येऽन्तः पतति । यत्र पूर्वरूपं न भवति, केवलं सम्प्रसारणं च भवति, तादृशानि उदाहरणानि खलु— loyal ( लाइअल् ); quality (कुआलिति); here (हिअऋ);[४५] dental (देन्ताल)[४६] । अत्र यथाक्रमं य-व-र-लानाम् इ-उ-ऋ ऌ इत्युच्चारणानि ।

---

४१. एङः पदान्तादति—अष्टा. (६।१।१०९)
४२. एङि पररूपम्—तत्रैव (६।१।९४)
४३. इग् यणः सम्प्रसारणम्—तत्रैव (१।१।४५)
४४. सम्प्रसारणाच्च—तत्रैव (६।१।१०८)
४५. पा. टी. २।१९
४६. While the tip is touching the teeth-ridge or teeth, the main part is free to take up any vowel position. The 'l' sound produced with a given vowel position of the main part of the tongue always has a noticeable acoustic resemblance to that vowel. It may be said to have the 'resonance' of

सङ्कोचनम्—

यद्यपि व्याकरणीयफलाभावात् पाणिनिना सङ्कोचनसंज्ञा न कृता, तथापि मातृकाचक्रविवेके अ-इ-उ-ऋ-ऌ-स्थाने यथाक्रमं ह्-य-व-र-लाः सङ्कोचननाम्नाऽभिहिताः[४७]। यथाऽर्धमात्राणां य-व-र-ला-नां स्थाने एकमात्रकेषु इ-उ-ऋ-ऌ-षु जातेषु मात्राप्रसारात् सम्प्रसारणसंज्ञा, तथा तद्वैपरीत्येन एकमात्राणाम् अ-इ-उ-ऋ-ऌ-इत्येषां स्थाने ऽर्धमात्रका ह्-य-व-र-लाः सङ्कोचनसंज्ञका भवन्तीति शोभनेयं सार्था संज्ञा। ह्-स्थाने अः न भवतीति ह-स्य अत्वं पाणिनिना सम्प्रसारणनाम्ना नाख्यातम्। तस्मादेव कारणात् हकारो नान्तस्थरूपेण गण्यते। किन्तु कण्ठ-तात्वोष्ठ-मूर्ध-दन्तेति पञ्चोच्चारणस्थानजानां स्वराणामनुरूपास्तत्तत्पञ्चोच्चारणस्थानजा ह्-य व-र-ला भवन्तीति इतरस्वरसाधर्म्यात् हकारः सङ्कोचनसंज्ञामर्हतीति युक्ता तान्त्रिकाणां कल्पना। उदाहरणानि— अति+अन्त>अत्यन्त; मधु+अरि>मध्वरि; धातृ+अंश>धात्रंश; ऌ+आकृति>लाकृति। Europe (यूरोप) इत्यत्र इ-स्थाने योच्चारणे, Queen (क्वीन्) इत्यत्र उ-स्थाने वोच्चारणे च अंशक्षयो मात्रासङ्कोचनं च द्रष्टव्ये।

गुणो वृद्धिश्च—

क) मति>मते, शम्भु>शम्भो- इत्यादौ गुणेन इ उ-स्थाने ए-ओ इति जायेते। अत्र प्रथमम् इ-उ इत्यनयोः पूर्वपार्श्वे अकारागमः ततश्च तेन सह सन्धिः, इति कल्पनीयम्। तत्प्रक्रिया च इ>अइ>ए, उ>अउ>ओ इत्यात्मिका। अग्निभूते३, पटो३ इत्यादौ परिस्थितिविशेषे वेदे विच्छेदेन अग्निभूता३इ पटा३उ इत्यादयो भवन्तीति प्रदर्शनार्थं व्याकरणस्यानुशासनम्[४८] ए-ओ-रूपप्राप्तये अकारागमस्यावश्यकतां सूचयति। यद्यप्यत्र

that vowel. It is not difficult to pronounce a whole series of l– sounds having the resonance of all the principal vowels i. e. e, a, ə, u, ɔ etc. — An Outline of English Phonetics (Sect. 665, Chap. 20, P. 174)

४७. पा. टी. २।१४

४८. एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्येदुतौ—अष्टा.(८।२।१०७)

विशिष्टपरिस्थितौ आकारः ए-ओ-इत्यनयोः पूर्वांश इति ज्ञायते, तथापि संवृतः[४९] संवृततरो[५०] वा अकारः पूर्वांशघटकः इति मतद्वयेन ह्रस्वः अः एव सामान्यतः पूर्वांशो भवति, दीर्घस्याकारस्य तादृशप्रयत्नाभावात्। अत्र प्रथमं स्थितः एकैकः स्वरः पश्चात् आगमस्वरेण मिलित्वा द्विगुणो जातः, सन्धौ च एकमात्रास्थाने द्वे मात्रे जाते इति गुणनतत्त्वमेव ए-ओ-इत्येतयोर्गुणसंज्ञया व्यपदेशे हेतुरिति मन्यामहे। W. S. Allen तु अत्र गुणशब्दस्य गुणन(multiplication) रूपमर्थमनालोच्य द्वैतीयिकगुणधर्म (secondary quality) इत्यर्थं[५१] कृतवानिति सम्भावयामः।

नी>नेत्र, पू>पोत्र इत्यादौ पूर्ववत् अकारागमः कल्पनीयः। विशेषस्तु अत्र ह्रस्वद्वयस्य सन्धौ विहितात् दीर्घात् एकं ह्रस्वं वियुज्य ह्रस्वत्वमापादनीयम्। अन्यथा अ-ई, अ-ऊ इत्यत्र मात्रात्रयस्थाने ए, ओ इति प्रत्येकं मात्राद्वयं न सङ्गच्छेत। तेन वृद्धि-क्षयोभयविषयोऽयम्।

विधि>वैध, बुद्ध>बौद्ध इत्यादिषु इकारोकारौ वृद्ध्या ऐ-औ इति जायेते इति वैयाकरणमतमत्रापि गृह्यते। अत्रापि इकारोकारयोः पूर्वांशे अकारागमे ततः सन्धौ ए-ओ इति भवतः, ततश्च तयोः पूर्वांशे पुनः अकारागमे सन्धौ च ऐ-औ इति भवतः—इति कल्पना करणीया। अत्र अकारद्वयस्य पूर्वांशघटकत्वात् सर्वेऽपि पूर्वांशमाकारं विवृतं च मन्यन्ते[५२]।

नीति>नैतिक, भूत>भौतिक इत्यादौ तु नेत्र, पोत्र इत्यादि-स्थलनिर्दिष्टदिशा इ-उ-इति ई-ऊ इत्यनयोरंशभूतौ इति कल्पना न्याय्या।

---

४९. संवृतत्वमकारस्य (ह्रस्वस्य)—चान्द्रवर्णसूत्राणि (२३)

५०. संवृतकरणतरमेकेषाम्—तै. प्रा. (२।२७)

५१. द्र. Phonetics in Ancient India (P. 13)

५२. ऐ-औ- इत्यनयोरकारांशेऽपि विवृतत्वमित्याहुः।
—उद्द्योतः (महाभाष्यस्य १।३।१० सूत्रस्थः)

तेन वृद्धिक्षययोरयं विषयो भवति। अत्रत्यपाश्चात्योदाहरणानि[५३] खलु—
oi (ग्री.)>oe (लै. प्रथमाबहुवचने)

spouze(स्पूज्, प्रा.इ.)>spouse(स्पाउज्),espouse(प्रा.फ्रे.), epouse(फ्रे.)

pris (प्रा. इ.)>price

hūs (प्रा. इ.)>house

rūt (प्रा. इ.)>rout

liun (प्रा. इ.)>lion

fin (मध्य. इ.)>fine

(ख) स्मृ>स्मर्तव्य, (कृप्>) क्लृप्>कल्प, कृ>कार्य—एषु ऋकार-ऌकारौ गुणेन अर्-अल् इति भवतः; ऋकारश्च वृद्ध्या आर् भवतीति व्याकरणाज् ज्ञायते। एषां तात्त्विकविश्लेषणमित्थं कर्तुं शक्यते—१/४स्वरमात्रा + १/२ व्यञ्जनमात्रा + १/४ स्वरमात्रा = १ ऋवर्णमात्रा इति त्रिभाष्यरत्नम्[५४]। ऋकारेण साम्यात् अर्धमात्रको लकारः, तमभितो वर्तमानौ अणुस्वरौ च ऌकारस्य घटकाविति कल्पनीयम्। एतयोर्वर्णयोः प्रथमाणुस्वरांशस्य विकासे अन्तिमाणुस्वरांशस्य च ह्रासे अर्, अल् इति भवतः; अर् इत्यस्य पूर्वभागे अकारागमे दीर्घे च आर् इति भवतीति इमानि वृद्धिक्षयोदाहरणानि।

कॄ>किरण; पॄ>पूरण। अत्र इर्-उर् (पश्चात् उकारस्य दीर्घो भवति) इत्येतौ अर् इत्यस्य समकक्षाविति अनयोरपि गुणत्वं व्याकरणे आख्यातुमुचितम्। तथापि व्याकरणशास्त्रीयप्रयोजनाभावात्तथा न कृतम्। अत्रापि प्रागुक्तरीत्या वृद्धिक्षयौ भवतः। ऋ: ar (ग.); ar, or (लै.); ir (जे.); ār (प्रा. इं.); ऋक्षः urses (लै.)—इत्यादिष्वपि वृद्धितत्त्वानि

५३. इमानि वर्णपरिवर्तनोदाहरणानि Growth and Structure of the English Language (Sect. 105, PP. 95, 96)तः आहृतानि।

५४. मात्रिकस्य ऋकारस्यादिरणुमात्रा स्वरभागः, मध्ये रेफः अर्धमात्रा, शेषा अणुमात्रा स्वरभागः; एतदृकारस्वरूपम्। —त्रिभाष्यरत्नम् (तै. प्रा. १।१५ सूत्रस्थम्)

यथायथं विवेचनीयानि। इत्थं कल्प : helpa (ग.), help इत्यादिष्वपि वृद्धिक्षयौ द्रष्टव्यौ। यथा पूर्वांशवृद्ध्या परांशक्षयेण च ऋकारः अर् भवति, तथा पूर्वांशक्षयेण परांशवृद्ध्या च अर् ऋत्वं लभते। यथा—स्पर्ध् (वै.) 7अपस्पृधेथाम् (वै.); अर्च् (वै.)7आनृचुः (वै.); अर्ह् (वै.)7आनृहुः (वै.); अर्ज्7ऋजु; वर्ज्7वृजिन; मर्द्7मृदित। एतेऽपि सङ्कोचनस्य विषयाः।

उप+इन्द्र7उपेन्द्र, उष्ण+उदक7उष्णोदक— इत्यादौ न कोऽप्यागमो भवतीति नायं वृद्धेर्विषयः। तव+एषः7तवैषः, जल+ओघः 7जलौघः इत्यादौ च एकमात्रायाः क्षयो भवतीति क्षयविषयोऽयम्। नूनं पूर्वोदाहृतगुणवृद्धिसादृश्यात् तेषु गुणवृद्धिव्यपदेशः पाणिनिना कृतः।

महाप्राणाल्पप्राणौ—

अल्पप्राण एव यथायोगं महाप्राणांशेन विसर्गेण हेन वा मिश्रितो महाप्राणो भवति, यथा— क+ह7ख; महाप्राणश्च महाप्राणांश-वियोगात् अल्पप्राणो भवति, यथा— ख — ह7क- इति प्रागुक्तम्। अत्र वृद्धिक्षयतत्त्वे वर्तमानेऽपि व्याकरणीयप्रयोजनाभावात् न काऽपि वृद्धिक्षय-सूचिका संज्ञा पाणिनिना विहिता।

'एव'-'एवम्' इत्यादिशब्देषु वृद्धिक्षययोरभावात् एते तदनुभयरूपेणैव ग्रहणमर्हन्ति।

## १८. व्याकरणसंज्ञाः पूर्वांशवृद्धिक्षयनिबन्धनाः

अत्रायं प्रश्नः समुदेति यत्, शंसितेषु केषुचिदुदाहरणेषु यथा पूर्वांशवृद्धिर्भवति, तथा परांशक्षयोऽपि भवति; तत् कथं वृद्धिसूचकसंज्ञयैव एषामभिधानम्, न पुनः कयाचित् क्षयसूचकसंज्ञया? कथं वा पूर्वांशक्षय-परांशवृद्धी यत्र भवतः, तत्र क्षयसूचकसंज्ञैवेति?

परिशीलनाज् ज्ञायते यत्, कस्यचिद्वर्णस्यैकांशस्य एकाधिकांशस्य वा वृद्धिक्षयाभ्यां तद्वर्णस्योच्चारणमात्रायां यानि सामञ्जस्यासामञ्जस्यानि भवन्ति, तान्यनपेक्ष्यैव केवलं पूर्वांशवृद्धिक्षयौ भित्तीकृत्य वृद्धिक्षयकल्पना नूनं वैयाकरणैर्विहिता। तथाहि—

क) ए इत्यस्य क्वचित् पूर्वांशक्षयो भवति, क्वचित् परांशक्षयः। सुस्मृते>सुस्मृति (सुस्मृत इयेन सः), इत्यादौ पूर्वांशभूतस्य अ-स्य क्षये यथा इः- इत्यवशिष्यते, तथैव वेष्ट् वेष्ट् त (असि.)>अववेष्टत, चेष्ट् चेष्ट् त (असि.)>अचचेष्टत इत्यत्र परांशस्य इकारस्य क्षये अकारोऽवशिष्यते । तेन एतदुभयार्थमपि क्षयसूचकसंज्ञाकरणमुचितमासीत । किन्तु पूर्वांशक्षयस्थल एव क्षयसूचको ह्रस्वस्थानापन्न इकारो विहितः[५५] । परांशक्षयस्थले तु क्षयसूचकसंज्ञामनभिधाय एकारस्य अकारो भवतीत्युक्तम्[५६] । तथैव चित्रगो>चित्रगु इत्यादौ यथा ओ-स्थाने उः पूर्वांशह्रासं सूचयति, तथा गो>गाम्, इत्यत्रापि ओ-स्थाने जायमान आकार परांशह्रासं सूचयति । तथापि पूर्वांशस्य अ-स्य अक्षतभावेनावस्थानात् क्षयसूचिका काऽपि संज्ञा तदर्थं न प्रयुक्ता, केवलमाकारो विहितः[५७] ।

ख) मते, शम्भो इत्यादौ यथा इ-उ इत्यनयोः पूर्वांशे अ वृद्ध्या ए-ओ इति भवतस्तथा भज7भेजे, अस्7 धि, दा7देहि, सह7सोढ़, वह7वोढ इत्यत्र अ-स्य परांशे उ-वृद्ध्याऽपि तावेव ए-ओ इति भवतः । किन्तु पूर्वांशवृद्धिनिबन्धनत्वात् इ-उ-स्थाने ए-ओत्वं गुणसंज्ञया गृहीतम्[५८]; अ-स्थाने जायमानयोः ए-ओ-इत्यनयोस्तु अतथात्वात् गुणसंज्ञया तयोर्व्यपदेशो न कृतः, केवलम् ए-ओ इत्येतौ भवत इत्युक्तम्[५९] ।

ग) नी7नेत्र, पू7पोत्र इत्यत्र लुप्यमानौ ई-ऊ इत्यनयोरंशभूतौ इ-उ-इत्येतौ क्षयसूचकसंज्ञां नव प्रयोजयतः, परन्तु पूर्वांशे अकारस्यागमात् वृद्धिसूचिका गुणसंज्ञा तत्र प्रयुक्ता[६०] ।

---

५५. पा. टी. २।२५

५६. विभाषा वेष्टि चेष्टयोः (अत्) – अष्टा. (७।४।९६)

५७. ओतोऽम्शसोः — तत्रैव (६।१।९३)

५८. ह्रस्वस्य गुणः— तत्रैव (७।३।१०८)

५९. तॄफलभजत्रपश्च (एत्), ध्वसोरेद्धावभ्यासलोपश्च, सहिवहोरोदवर्णस्य — तत्रैव (६।४।१२२, ६।४।११९, ६।३।११२)

६०. सार्वधातुकार्धधातुकयोः (गुणः)—तत्रैव (७।३।८४)

घ) अव्>ओम्, भवत्>भोस्, भगवत्>भगोस्, अघवत्> अघोस् इत्यत्र अव्स्थाने ओकारः यद्दृश्यते, तत्रापि अर्धमात्रकस्य व-स्य स्थाने एकमात्रक उकारो भूत्वा सन्धिर्भवतीति सम्प्रसारणसंज्ञां प्रयुज्य स कर्तव्य आसीत्। किन्तु पूर्वांशस्य अ-स्य परिवर्तनाभावात्तथा न कृतम्[61]।

ङ) संस्कृतसम्प्रसारणोदाहरणेषु सम्प्रसारणपरस्वरस्य नियतमेव पूर्वरूपत्वात् तत्र वस्तुतो य-व-र-णां तत्परस्वरस्य च स्थाने इ-उ-ऋ-इत्येते भवन्तीति कल्पनीयम्। यथा—यज्>इष्ट। अत्र य् अ इत्यनयोः स्थाने इः। एवं सति मिलितयोः य् अ इत्यनयोः सार्धैकमात्रकत्वात् तत्स्थाने जायमानस्य इकारस्य च एकमात्रकत्वात् वस्तुतो नायं सम्प्रसारणस्य विषयः, प्रत्युत सङ्कोचनस्य। परन्तु पूर्वांशस्य य् इत्यस्य अर्धमात्रकत्वात् सूत्रण तत्स्थाने एव एकमात्रकस्य इकारस्य जायमानत्वात् परांशस्य च पूर्वरूपापरपर्याये लोपेऽपि तदनपेक्ष्य पूर्वांशवृद्धियोगात् सम्प्रसारणेति नाम्नैव तदाख्यातम्।

च) ऋ-स्थाने यत्र अर् आर् वा भवति ऌ-स्थाने च अल् भवति, तत्र पूर्वाणुस्वरस्य यथा वृद्धिर्भवति, पराणुस्वरस्य तथैव क्षयो भवति। किन्तु पूर्वांशस्य वृद्धिं पुरःसरीकृत्य तत्र गुण-वृद्धीति वृद्धिसूचक-संज्ञया व्यवहारः, न तु परांशक्षयनिबन्धनया कयाचित् क्षयसूचकसंज्ञया।

अतः पूर्वांशस्य वृद्धिं क्षयं वा आधारीकृत्य व्याकरणसंज्ञासु विहितास्वपि सर्वांशेषु वर्तमाना वृद्धिक्षया यथास्वमूहितव्याः।

## १६. प्रत्यक्षं परोक्षं च परिवर्तनम्

(क) विनिमयः—

लोक>लोग इत्यत्र प्रत्यक्षमेव क-स्थाने गो भवति, गत्वप्राप्तेः पूर्वं वर्णान्तरस्याप्रसक्तेः। एवं राग>राक (पै. प्रा.) इत्यत्र ग-स्थानेऽपि

६१. भोभगोअघोअपूर्वस्य योऽशि—तत्रैव (८।३।१७)

कः। यत्र परिवर्तनानन्तरमन्यदपि परिवर्तनं भवति, तत्र मूलपरिवर्तने परिवर्तनस्य जायमानत्वेन मूलशब्दापेक्षया द्वितीयपरिवर्तनस्य परोक्षत्वात् परोक्षं परिवर्तनं भवतीति स्वीकर्तव्यम्। यथा—वाच्>वाक्>वाग् इत्यत्र चः कत्वेन साक्षात् परिवर्तते, तथा कः अपि साक्षात् गत्वेन—इति एकाधिकप्रत्यक्षपरिवर्तनसत्त्वात् वाक्>वाग् इति परोक्षपरिवर्तनस्योदाहरणम्।

इयं क्रमिकता नैरुक्तैरपि गृहीता। तत्र हि परिवर्तनं प्रत्यक्ष, परोक्षम्, अतिपरोक्षं चेति त्रिविधं कल्पितम्[६२]। निघण्टु<निगन्तृ<निगमयितृ इति तत्रत्यमुदाहरणम्।

परिवर्तनस्य क्रमिकता विश्वस्य सकलानि वस्तून्यालिङ्गति। अतो वर्णपरिवर्तनेऽपि सा वर्तत एव। तत्र 'वाग्' इति रूपग्रहणात्पूर्वं वाच्>वाक् इति कल्पनायां हेतुस्तु च-गा-पेक्षया च-क योरधिकसामञ्जस्यम्। च-स्य हि के-न यथा सामञ्जस्यं न तथा गे-न। चस्तालव्य; कस्तु कण्ठ्यः—इत्येक एवानयोर्भेदः। अन्यत्सर्वं (स्पृष्टाघोषाल्पप्राणत्वं) समानम्। च-स्तालव्याघोषः, गस्तु कण्ठ्यघोषः - इति तयोर्मध्ये द्वौ भेदौ वर्तेते इति च-का-पेक्षया च-ग योर्वैषम्यमधिकम्। च-कयोर्यथा एकेन भेदस्तथा क-ग-योरपि। कः अघोषः, गश्च घोषः—इत्येकं भेदं विहाय एतयोः अन्यत्सर्वं समानम्। अत एव एकमेव भेदं निर्जित्य चकारे ककारत्वमापन्ने सति पुनरेकं भेदमतिक्रम्य ककारो गकारो भवतीति विनिमयपरिवर्तनस्य क्रमिकत्वकल्पनं न्याय्यम्। यथा चलन् जनः प्रथमतः प्रथमपदक्षेपस्थानं गत्वा ततो द्वितीयपदक्षेपस्थानं प्रविशति, यथा च धूमशकटं प्रथमे विरामकेन्द्रे (station) विरम्य विरामकेन्द्रान्तरं प्रविशति, तथा वर्णोऽपि अल्पभेदविशिष्टवर्णत्वेन परिणतस्ततः पुनरप्यल्पभेदमुल्लङ्घ्य वर्णान्तरत्वमाप्नोति।

---

६२. त्रिविधा हि शब्दव्यवस्था—प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च—ऋज्वर्थव्याख्या (निरुक्तस्य १।१।१स्था)

ननु त्वरितगतिः कार्यार्थी प्रथमपदक्षेपस्थाने पादमदत्त्वाऽपि द्वितीयपदक्षेपस्थाने पादं ददाति, प्रेष्यपत्रादिवाहि धूमशकटं (mail train) च प्रथमपतितेषु केषुचित् केन्द्रेषु अविरम्यैव उत्तरकेन्द्रे विरमतीति दृष्टान्तद्वयं प्रक्रान्तस्य वर्णविनिमयक्रमिकत्वस्य बाधकमिति चेन्न; प्रथमपदक्षेपस्थाने पादमदातुरपि अवश्यमेव प्रथमपदक्षेपस्थानातिक्रमणस्य प्रथमपतितत्वात्, पूर्वविरामकेन्द्रेषु अविरमताऽपि धूमशकटेन आदौ तदतिक्रमणस्यावश्यकत्वाच्च। तस्मात् कुत्रचित् च>ग इत्युक्तौ तत्र च>क इति प्रत्यक्षपरिवर्तनस्थितिरतिक्रान्तेति कल्पनीयम्।

यद्यपि वर्णविज्ञाननये स्वरयन्त्राधिजिह्वयोर्विविधस्थित्या जिह्वाया ओष्ठस्य वा विविधमात्रया स्पर्शास्पर्शाभ्यां पृथक् पृथक् सर्वे वर्णाः प्रत्यक्षमेव जायन्ते, तथापि स्वरयन्त्रस्य वायुप्रवाहस्य च साधारणस्थितिं केन्द्रीकृत्य तदपेक्षया अल्पाधिकक्रमेण विकृत्या जायमानानां वर्णानां यथोचितक्रमेण विनिवेशे सति प्रत्यक्षपरोक्षभावो भवत्येव। तथाहि केवलं श्वासग्रहण-विसर्जनकालिकी स्थितिः उच्चारणेन्द्रियाणां स्वाभाविकी स्थितिः। तदानीं स्वरयन्त्रमार्ग उन्मुक्तस्तिष्ठति। वर्णोच्चारणप्रवृत्तौ अस्यां स्थितौ विविधा विकृतयो भवन्ति। उदाहरणम्— यदि स्वरयन्त्रमार्गस्य उन्मुक्तता यथापूर्वं तिष्ठति, वायुवेगः अल्पीयान् भवति, अधिजिह्वा अस्वाभाविकीं स्थितिमवलम्ब्य नासारन्ध्रमाच्छादयति, जिह्वा च दन्तमूलं क्षणमवरुध्य वायुप्रवाहं बहिर्निर्गमयति, तदा त उच्चार्यते। यदि एतत् सर्वं समानं भवति, केवलं वायुवेगोऽधिको भवति, तदा थ उच्चार्यते। यदि तु अपरिवर्तितो वायुवेगः अल्पीयानेव तिष्ठति, केवलं स्वरयन्त्रमार्गोऽवरुद्धो जायते, तदा द उच्चार्यते। स्वरयन्त्रमार्गावरोधः, वायुवेगाधिक्यम्—इति द्वयोराधिक्ये यथा धो भवति, तथा स्वरयन्त्रमार्गावरोधः, अधिजिह्वायाः प्रकारान्तरेण अस्वाभाविकी स्थितिः (यया मुखनासिकोभयमार्गेण वायुर्विसृज्यते) - एतद्द्वयाधिक्ये नः उच्चार्यते।

इत्थं तोच्चारणे विकृतिः सर्वलघुः। तत्स्थितेरेकस्यां दिशि एक-विकृत्याधिक्ये यथा थो भवति, तथा अन्यस्यां दिशि एकविकृत्याधिक्ये दो

भवति । द्वयोर्विकृत्योराधिक्ये धो भवति, नश्च भवति । तत्र स्वरयन्त्र-मार्गावरोधलक्षणा एका विकृतिर्द-न-साधारणी, अन्या च परस्पराद् भिन्ना। दोच्चारणे हि मुखमार्गेण, नोच्चारणे च मुखनासिकोभयमार्गेण वायुर्निःसरति। एतत्प्रदर्शनार्थम् त — द — न / थ — ध इत्याकारिका स्थितिः चित्रे विधास्यते।

ख) वृद्धिक्षयौ—

वृद्धिक्षयाख्यपरिवर्तनद्वयेऽपीयमेव पद्धतिः । तथा हि—सुगण्+षष्ठः>सुगण्ट्षष्ठः इत्यत्र ट ( उक् )स्य साक्षादागमो भवतीति प्रत्यक्षवृद्धिरियम् । सुगण्ट् षष्ठः>सुगण्ठ् षष्ठः इत्यत्र तु प्रथमपरिवर्तनेन आगते टकारे पुनः परिवर्तनेन ठकारो भवति इति मूलरूपापेक्षया द्वितीयपरिवर्तनं परोक्षपरिवर्तनस्य विषयः।

तथैव चक्षिङ्+त>चष्टे इत्यत्र क्ष-गतस्य क-स्य साक्षादेव क्षयः। राधा>राही (म. प्रा.)>राइ (ओ.) इत्यत्र तु प्रथमं धकारगतोऽल्पप्राणांशः क्षयं गतः। ततश्च अवशिष्टो होऽपि लुप्त इति मूलशब्दापेक्षया द्वितीयपरिवर्तनस्य परोक्षत्वम्।

यदि कुत्रचित् ठागमो ध-लोपो वा केनचित् कथ्यते, तर्हि ट-हेति प्रत्यक्षपरिवर्तनस्थितिमतिक्रम्यैव स विहित इति कल्पनीयम्।

अतएव परोक्षपरिवर्तनात्पूर्वं प्रत्यक्षपरिवर्तनं प्रत्यक्षपरिवर्तन-स्थितेरतिक्रमणं वा अपरिहार्यमिति स्थितम्।

## २०. भाषातत्त्वविश्लेषणं व्याकरणस्य मुख्यं लक्ष्यं न

प्रदत्तानि प्रत्यक्षपरोक्षपरिवर्तनोदाहरणानि व्याकरणसम्मतानि। परन्तु व्याकरणेषु कानिचिदुदाहरणानि वर्तन्ते, यानि प्रत्यक्षपरिवर्तन-रूपेण प्रतिपादितानि। वस्तुतः तेषु कानिचित् प्रत्यक्षपरिवर्तनानि, कानिचिच्च परोक्षपरिवर्तनानि भवन्ति। यथा—

क) सत्+टीका>सट्टीका - इत्यत्र प्रत्यक्षपरिवर्तने त-स्य येन सूत्रेण टत्वं[६३] भवति, तेनैव सूत्रेण यद्+टीका>यट्टीका इत्यत्र द-स्य टत्वं

६३. ष्टुना ष्टुः — अष्टा. (८।४।४१)

भवति । तत्र द>त>ट इति एकैकभेदातिक्रमो भवतीति नेदं प्रत्यक्ष-परिवर्तनम् ।

ख) सिषेध्-थ (असि.)>सिषेद्ध इत्यत्र, सिध्+त>सिद्ध-इत्यत्र च एकेनैव सूत्रेण[६४] ध्>थ् इति प्रत्यक्षपरिवर्तनं त्>ध् इति परोक्षपरिवर्तनं च भवति । आद्ये हि थः अघोषत्वात् एकेनैव धात् भिन्नः, द्वितीये च तः अल्पप्राणाघोष इति द्वाभ्याम् ।

ग) जगत्+भ्याम्>जगद्भ्याम् इत्यत्र, अग्निमथ्+भ्याम्> अग्निमद्भ्याम् इत्यत्र च त-थ-योर्दत्वविधायकमेकमेव सूत्रम्[६५] । तत्र थ्>द् इत्ययं परोक्षपरिवर्तनस्य विषयः । दो हि अल्पप्राणघोषत्वात् महाप्राणाघोषात् थात् द्वाभ्यां भिन्नः ।

इत्थं परोक्षपरिवर्तनं प्रत्यक्षपरिवर्तनस्थितेरतिक्रमणं वाऽनुक्त्वा व्याकरणे सर्वत्र प्रत्यक्षं परिवर्तनं यत् प्रतिपादितम्, तद् भाषाविज्ञान-विरुद्धम् । क्वचित् प्रत्यक्षपरिवर्तनस्थलेऽपि व्याकरणे परोक्षपरिवर्तनं प्रदर्शितम् । यथा—स्व+छाया>स्व त् ( तुक् ) छाया>स्वच्छाया इति । अत्र x>त्>च् इति प्रत्यक्षमार्गं त्यक्त्वा x>त्7द्>ज्7च् इति परोक्षमार्गो गृहीतः[६६] । एतत्प्रक्रियागौरवस्य हेतुस्तु एतदर्थं स्वतन्त्रं सूत्रमकृत्वा स्थितैः सूत्रैरेव चत्वसाधनम् । स्थितानि सूत्राणि च यथा पाणिनिना विन्यस्तानि, तदनुसारेण अस्य परोक्षमार्गस्य ग्रहणं विना गतिर्नास्ति । किं चात्र च् ( उक् ) प्रत्ययः कर्तव्यः । परन्तु तदर्थं पृथक् सूत्रमावश्यकमिति तथा न कृत्वा स्थितैः सूत्रैरेव समाधानं विहितम् । एतद् भाषाविज्ञानविरुद्धमस्तु नाम; परन्तु व्याकरणस्योद्देश्यस्य भाषाविज्ञान-स्योद्देश्यात् पृथक्त्वात् अत्र वैयाकरणेषु दोषारोपो नैव विधेय इति

६४. झषस्तथोर्धोऽधः—तत्रैव (८.२।४०)

६५. झलां जश् झशि—तत्रैव (८।४।५३)

६६. श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः । ततश्चर्त्वस्यासिद्धत्वात् पूर्वं श्चुत्वेन जः । तस्य चर्त्वेन चः । —सि. कौ. (१४६ सूत्रस्था)

W. S. Allen- निगदितमत्र[६७] अणिभानयोग्यम् । प्रकृते लघुनोपायेन शब्दसाधनमेव व्याकरणस्य मुख्यं लक्ष्यम्, भाषातत्त्वविश्लेषणं च गौणम्। यत्र गौणं लक्ष्यं मुख्यलक्ष्यसाधनेऽन्तरायो भवति, तदा नूनं वैयाकरणास्तदुपेक्षन्ते। प्रदत्तोदाहरणेषु केषुचित् व्याकरणसूत्रं भाषाविज्ञाननियमश्च संवदत एव। येषु भाषाविज्ञानतथ्यप्रदर्शनं न भवति, तेषु पृथक्सूत्रकरणमपेक्षितमासीदिति पाणिन्यादिभिस्तदकृत्वा लाघवार्थं भाषातत्त्वानामव्यापकानि सूत्राणि निर्ममिरे।

लाघवेन शब्दसाधनं मुख्यलक्ष्यीकृत्य भाषातत्त्वविपरीतकथनस्य अन्यानि उदाहरणानि खलु—

(१) षट् + सन्तः > षट्त्सन्तः। अत्र तकारागमो भाषाविज्ञानानुमोदितः। व्याकरणे तु धकारागमं कृत्वा[६८] पुनस्तस्य स्थाने तकारः क्रियते इति जटिलो मार्गो गृहीतः। अत्र भाषाविज्ञानस्य सरलमार्गत्यागे हेतुस्तावत् - यदि तकारागमो व्यधास्यत, तर्हि सुगण्ट्षष्ठ >सुगण्ठ्षष्ठ इत्यत्रेव षट्थ्सन्त इति पाक्षिकरूपं भवेत्[६९], यन्नानुमोद्यते संस्कृतभाषायाम्। ध-माध्यमेन त-करणे तु थ-प्राप्तिवेलायां तः ध इव भवति[७०] इति थ इत्यादेशो निवार्यते। इदं व्याकरणीयोद्देश्यं भाषातत्त्वविपरीतमार्गग्रहणे हेतुः।

---

६७. However, we can hardly criticise our predecessors of two millinia ago for a procedure which only a few linguists in the last two decades have begun to reject as inadequates and we shall see that the Indians, unlike many of their Western successors, appreciated that the technique was a means to a limited practical end, and by no means the ultimate analysis— Phonetics in Ancient India (Introduction, P- 6)

६८. डः सि धुट्— अष्टा. (८।३।२९)

६९. पा. टी. २।१०

७०. द्र. पूर्वत्रासिद्धम्—अष्टा. (८।२।१)

(२) i) Went इति go-धातो र्भूतकाल-रूपमिति वैयाकरणाः। परन्तु go-धातोर्भूतकालरूपे कालक्रमेण लुप्ते तस्य लुप्तस्य स्थाने गत्यर्थस्य wend धातोर्भूतकालिकं went इति रूपं प्रयुज्यत इति otto. Jesperson-प्रतिपादितं भाषाविज्ञानाविष्कृतं तथ्यम्[७१]।

यथा मृतदारस्य धृतराष्ट्रस्य मृतपतिकया गान्धार्या विवाहः संवृत्तस्तथाऽत्र लुप्तभूतकालप्रयोगस्य go-धातोः go इति वर्तमानकाल प्रयोगः wend-धातोः went इत्याख्यभूतकालरूपेण सह मिलित इति अयं 'धृतराष्ट्र-गान्धारीन्याय' इति व्यपदेश्य इति नः प्रतिभाति।

ii) इत्थम् इण्-धातोः स्थाने गा इति विधानं[७२] प्रत्यक्ष-परोक्षपरिवर्तनाभ्यां नोपपद्यते। इ इति हि तालव्यस्वरः, गा इति च कण्ठ्यस्वरोपेतः कण्ठ्यस्पर्शवर्णः। तस्मात् इण्धातोर्लुङ्-लकाररूपस्य कालान्तरे लोपात् तत्र गत्यर्थक गाङ्-धातोः परस्मैपदे प्रयोग इति कल्पनीयम्। इदं भाषाविज्ञानतथ्यं व्याकरणे नैवोद्घाटितम्, प्रत्युत इण्-स्थाने गा इत्यादेशं विधाय सत्यापलापेनापि लघूपायेन शब्दसाधनरूपं स्वीयलक्ष्यमव्याहतं रक्षितम्।

३. हन्>जहि इत्यत्र हन्-धातोः ह-स्य पूर्वं जकारांशागमे झ इति भवति, ततश्च हांशलोपे ज इति भवति। किन्तु ह-स्थाने जादेशो नोपपद्यते। कण्ठ्यमहाप्राणोष्मणो ह-स्य तालव्याल्पप्राणस्पर्शेन सामञ्जस्याभावात्। तथापि पाणिनिना आगमलोपावनुक्त्वा जादेशं

---

७१. In a great many cases, too, one form was takan from one word and another from a totally different one, a phenome-non ( called by osthoff "suppletiovwesen" ) which we have in a few instances in Modern English (good-better, go-went etc,)— Growth and Structure of the English Language (Sect. 99, Chap. 1, P. 19).

७२. इणो गा लुङि—अष्टा. (२।४।४५)

चोक्त्वा[७३] लघूपायेन शब्दसाधनं विहितम्। जहार, जिहीते इत्यादौ तु ह>झ>ज् इति क्रमपरिवर्तनमेव तेन दर्शितम्।

४. पथिन्>पन्थाः इत्यत्र पाणिनिना थ-स्य न्थादेशो विहितः[७४]। अयं च वस्तुतो नकारागमस्य विषयः।

५. द्वावुष्ट्रौ उष्ट्रगोयुगम्। अत्र गोयुगशब्दो 'गोद्वय'रूपमवयवार्थं परित्यज्य अर्थसम्प्रसारणनियमेन कालक्रमेण 'यस्य कस्यचिद्वस्तुनो द्वयम्' इत्यर्थं प्रकाशयति इति भाषाविज्ञानानुकूलो विचारः। एतत्तात्त्विकविश्लेषणं लघूपायेन शब्दसाधनरूपे लक्ष्येऽन्तरायः स्यादिति विचिन्त्य वैयाकरणास्तत्र गोयुगच्-प्रत्ययमाचक्षते[७५]।

एतानि व्याकरणस्य स्वतन्त्रं लक्ष्यं प्रतिपादयन्ति।

## २१. सजातीयं विजातीयं च परिवर्तनम्

प्रत्यक्ष परोक्षं चेति द्विविधं विनिमय-वृद्धि-क्षयात्मकं परिवर्तनमयं पुनरपि द्विधा विभक्तुं शक्यम्— (१) सजातीय (२) विजातीयं चेति।

(१) सजातीयप्रत्यक्षपरिवर्तनेषु त्रयः प्रकाराः। यथा—

(क) विनिमयः —

काक>काग (हि.); मातृ : mother। अनयोः क-गौ सममेव कण्ठस्थानात् स्पृष्टाख्याभ्यन्तरप्रयत्नेनोच्चार्येते; त-दौ च दन्तस्थानात् तेनैव प्रयत्नेन।

(ख) वृद्धिः —

प्राङ्+षष्ठः>प्राङ्क्षष्ठः ; शिव+छाया>शिवच्छाया, कुट>कुट्ट, सन्+सः>सन्त्सः,वानर>बन्दर(हि.),kun (ले.)>hound, mancyn (प्रा. इ.)√ mankind, ग्रीष्म (वै.)>ग्रीष्प्म[७६] (वै.), अयस्मय (वै.)∠

---

७३. हन्तेर्जः – तत्रैव (६।४।३६)

७४. थो न्थः – तत्रैव (७।१।८७)

७५. द्वित्वे गोयुगच्—सि. कौ. (१८३० सूत्रस्थवार्तिकम्)

७६. अघोषादूष्मणः परः स्पर्शपरात्तस्य सस्थानः —तै. प्रा. (४।९)

अयस्मय (वे.)[७६]— एषु वर्ग्यपञ्चमवर्णानामागमभूताः [क-च-ट-त-द-पाः तत्तदागमिवर्णानां सजातीयाः । यथा— प्राङ्क्षष्ठ इत्यत्र [आगमी ङः कण्ठ्यः, तस्यागमः कोऽपि कण्ठ्यः इत्यादि ।

(ग) क्षयः—

रामस्स्थाता>रामस्थाता, मुग्ग (म प्रा.)>मुग (ओ.) अत्र पर-स-ग- सजातीयौ पूर्व-स-गौ क्षयं लभेते ।

२. विजातीयप्रत्यक्षपरिवर्तनेषु त्रयः प्रकाराः । यथा—

(क) विनिमयः—

सत्+चित्>सच्चित; तिलक>टीका(ओ.); पच् : peka(स्लै.) । अत्र उच्चारणस्थानदृष्ट्या यथाक्रमं च-ट-काः त-त चा-ना विजातीयाः । परिवर्तनार्हौ विजातीयौ वर्णौ 'अन्तर-अन्तरतम' इति पाणिनिव्याकरणे उक्तौ, अत्र च अन्तरङ्गनाम्ना चित्रविवरणे सूचितौ ।

(ख) वृद्धिः—

मकर7मस्कर; शे अते (असि.)7शेरते; ज्ञा इत (असि.)>ज्ञापित । अत्र आगमाः स-र-पा असवर्णसविधे भवन्तीति विजातीयत्वम् ।

(ग) क्षयः—

रक्त : red; सप्त7सात (हि.); उत्पाट्7उपाड (ओ.) । अत्र लुप्यमानाः क-प-ताः उच्चारणस्थानदृष्ट्या सन्निहितवर्णानां विजातीयाः ।

३. सजातीयं परोक्षपरिवर्तनं त्रिविधम् । यथा—

(क) विनिमयपूर्वको विनिमयः—

वाक् माधुरी7वाग्माधुरी7वाङ्माधुरी (क्7ग्7ङ्)

(ख) वृद्धिपूर्विका वृद्धिः—

सुगण् षष्ठः7सुगण्ट्षष्ठः7सुगण्ठ्षष्ठः ( × 7ट्7ठ् )

(ग) क्षयपूर्वकः क्षयः—

बधू7बोहू (ओ.)>बोउ (ओ.)। (ध्7ह्7 × )

४. विजातीयं परोक्षपरिवर्तनं षोढा । यथा—

---

७६. अघोषादूष्मणः परः स्पर्शपरात्तस्य सस्थानः—तै. प्रा. (४।९)

(क) विनिमयपूर्विका वृद्धिः—

पेटी>पेड़ी (ग्रो.)>पेढी (ग्रो.)। (ट्>ड्>ढ्)

विद् सि>विद्हि (असि.) विद्धि। (स्>ह्>ध्)

(ख) विनिमयपूर्वकः क्षयः —

वेष7बेख (असि.)>भेक (ग्रो.)। (ष्7ख्>क्)

(ग) वृद्धिपूर्वको विनिमयः —

घटन>गठन (ग्रो.)>गढण (ग्रो.)। (ट्>ठ्>ढ्)

बुध्+त>बुध् थ (असि.)>बुद्ध। (त्>थ्>ध्)

(घ) वृद्धिपूर्वकः क्षयः —

लिह्>लिढ् (असि.)>लिड्। (ह्>ढ्>ड्)

स्निह्त>स्निघ्त (असि.)>स्निग्ध। (ह्-घ्-ग्)

(ङ) क्षयपूर्वको विनिमयः —

क्षुध्7क्षुद्7क्षुत। (ध्>द्>त)

ककुभ्>ककुब्>ककुप्। (भ्>ब्>प्)

(च) क्षयपूर्विका वृद्धिः —

डाकिनी7डाग्राणी (ग्रो.)। (क्7×7ह्)

घर्म : हर्म (असि.) : thorm। (घ् : ह : थ)

एषु उदाहरणेषु द्वे द्वे परिवर्तने स्तः। द्व्यधिकपरिवर्तनोदाहरणानि खलु—

वचन>बैन (प्रा. हि.); मदन7मैन (प्रा. हि.); सूचना7सैन (प्रा. हि.)। वचन>बचन>बग्रन>बयन>बइन>बैन—एवमादिकं परिवर्तनमत्र कल्पयितव्यम्।

एतत्परिवर्तनप्रकाशकं विवरणचित्रमत्र प्रदीयते।

## विवरणचित्रम्—१


परिवर्तनम्
प्रत्यक्षम्
परोक्षम्
सजातीयम्
विजातीयम्
सजातीयम्
विजातीयम्
विनिमयः
वृद्धिः
क्षयः
विनिमयः
वृद्धिः
क्षयः
विनिमयः
वृद्धिः
क्षयः
विनिमयः
वृद्धिः
क्षयः
वृद्धिपूर्वकः
क्षयपूर्वकः
विनिमयपूर्वकः
क्षयपूर्वकः
विनिमयपूर्वकः
वृद्धिपूर्वकः

## २२. मूलरूपनिर्णयः कठिनः

संस्कृतव्याकरणाज् ज्ञायते यत्— गच्छत् इति मूलशब्दः। तस्य प्रथमाबहुवचने तत्सजातीयस्य न-स्य आगमे[७७] गच्छन्त् इति भवति। तेन सजातीयप्रत्यक्षवृद्धेरुदाहरणमिदम्। भाषाविज्ञानमते तु गच्छन्त् इति मूलशब्दः, गच्छतः इत्यत्र तु नलोपः भवति[७८]। एतन्मते इदं सजातीय-प्रत्यक्षक्षयोदाहरणं भविष्यति। उभयमपि भाषातत्त्वदृष्ट्या साधु।

एवंविधस्थलेषु वास्तवमूलरूपनिर्णयः कठिनः। पूर्वं तः, परस्तात् न्तः; उत पूर्वं न्तः, परस्तात् तः। अयमेको मौलिकः प्रश्नः, यस्य समाधानं बीजाङ्कुरप्रश्नवद्दुष्करम्। तत्र हि-प्रथमतो बीजं ततोऽङ्कुरः, उत प्रथमतोऽङ्कुरस्ततो बीजमिति प्रश्नोऽसमाधेय एव वर्तते।

अनयैव रीत्या कस्मिन्नपि शब्दे तकारं दृष्ट्वा स स्वयं मौलिकः, उत थकारात्, दकारात्, अन्यस्मात् कस्माच्चिद्वर्णाद्वा उद्भूत इति प्रश्नस्य निर्णयः कठिन एव। इदं त्ववश्यं स्वीकर्तव्यं यत् - आधुनिकं भाषाविज्ञानं वर्णानां गतिस्थितिपर्यवेक्षणेन विविधभाषातुलनादिना च मूलशब्दनिरूपणाय प्रयतते। परन्तु तस्य मूलशब्दकल्पना सर्वत्रापि वास्तविकी स्यात् - एतद्विषये सन्देहो जायते। यतो हि वर्णपरिवर्तनस्य गतिः सर्वत्र नैकरूपा। देशः कालो विविधपरिस्थितिश्च यथा गोष्ठीषु, व्यक्तिषु, व्यक्तीनां विविधकालिकस्थितिषु च स्थूलसूक्ष्मात्मकानि अचिन्त्यानि असंख्यानि परिवर्तनानि घटयन्ति, तथैव प्रतिमुहूर्तं परिवर्तनशीलानि मनुष्याणां वाग्यन्त्राणि आश्रित्य वर्तमानायां वर्णमालाया-

---

७७. द्र. उगिदचां सर्वनामस्थानेऽधातो;—अष्टा. (७।१।७०)

७८. संस्कृतका शतृप्रत्यय 'अत्' (अन्त) प्रा. भा. यू. कृत् प्रत्यय एन्त्, ओन्त् (ent, ont) से विकसित हुआ है। × × × इसी 'अन्त' का दुर्बलरूप 'अत्' भी पाया जाता है, जो संस्कृत तथा ग्रीक दोनों में मिलता है। —संस्कृतका भाषाशास्त्रीय अध्ययन (संस्कृतपदरचना, पृ. १४४)

मपि अचिन्त्यानि परिवर्तनानि प्रयोजयन्ति । तस्माद्वर्णपरिवर्तनस्य गतिः कदाचिदग्रमुखीभूय अनुलोमात्मिका भवति ( यथा - वाक् > वाग् ) कदाचिद्वा पश्चान्मुखीभूय प्रतिलोमात्मिका भवति ( यथा- तद् > तत् ), कदाचिद् वृद्ध्या विकासमुखी भवति (यथा- मत्स्य > मध्स्य),[७६] कदाचिच्च क्षयेण ह्रासमुखी भवति (यथा—क्षुध् + बाधा > क्षुद्बाधा), कदाचिदग्रमुखीभूय पश्चान्मुखी भवति [यथा-(रामात् >) रामाद् + तत्त्वम् > रामात्तत्त्वम्], कदाचिद्वा पश्चान्मुखीभूय पुनरग्रमुखी भवति (यथा- वाच् > वाक् > वाग्)।

विविधसमयेषु अगणितह्रासविकासात्मकैरनुलोमप्रतिलोमात्मकैश्च स्तरैरतक्यभावेन वर्णस्य परिवर्तमानत्वात् अनाद्यन्तस्य कालस्य एकस्मिन्नंशे सीमास्तम्भं संस्थाप्य 'कश्चिद्वर्णस्तरः आदिमः, कश्चिद्वा अन्तिमः' इति निर्धारणं नैव समीचीनं स्यात्। यतस्तथा कथ्यमानयोराद्यन्तस्तरयोः पूर्वत्र परत्र च अज्ञेया असंख्येयाः स्तराः स्युः। अत एव कमपि स्तरं साधारणस्तरं प्रकल्प्य तदितरस्य कस्यापि स्तरस्य अन्तिमह्रासस्तर इति, कस्यचिच्चान्यस्य अन्तिमविकासस्तर इति कल्पना नैव युज्यते। कस्यचित् सन्निधे सर्वेषामेषां स्तराणामनुपस्थितेः ह्रासविकासयोर्यथार्थनिरूपणमसम्भवमेव। अपि च विविधासु सामञ्जस्यबहासु भाषासु देशकृता नूतना वर्णा अपि विद्यन्ते, यैरियं समस्या जटिलतरीभवति। तथापि व्यावहारिकक्षेत्रे आद्यन्तकल्पना अपरिहार्या । उपलब्धायाः प्राचीनतमभाषायाः शब्दावलीं व्यवहारसौकर्याय शङ्कू-(starting point)कृत्य भाषातत्त्वविषयकचिन्तायामग्रसरणं नूनं समुचितं भवेत् । एवं सत्यपि प्रकृतसत्य-व्यावहारिक सत्ययोः प्रभेदो न कदापि विस्मरणीयः।

वर्णपरिवर्तनपद्धतेर्धारावद्धतासंपादने इमे अन्तरायाः। एकदा 'शाक' इत्युच्चार्यमाणः शब्दः अधुना कुत्रचित् 'साग' इत्युच्चार्यते । भविष्यत्काले पुनः 'शाक' इत्युच्चारणं न भविष्यतीति नैव वक्तुं शक्यते। किंच 'शाक' शब्दस्य पूर्ववर्ति अवस्थान्तरं नासीदित्यपि कथनं कदाचिद्

---

७९. पा. टी. २।१०

भ्रान्तं स्यात् । अतएव यावत्पर्यन्तं 'शाक'शब्दस्य पौर्वकालिकमवस्थान्तरं न दृष्टम्, तावत्पर्यन्तमस्य आदिस्तरस्वरूपेण ग्रहणादृते नान्या गतिः । एवं 'साग' शब्दोऽपि अन्तिमस्तररूपेण आपाततो ग्राह्यः ।

Habilitas (लै.); habilete (प्रा. फ्रे.); hability (मध्य. इं.); ability । अत्र प्रथमरूपत्रये h इति वर्तते, चतुर्थरूपे तु नास्ति । ह-ह्रासस्योदाहरणमिदम् । लैतिनपूर्वभाषासु अस्मिन् शब्दे ह आसीन्न वा, इङ्गिलश्जन्यासु भाषासु भविष्यति काले स्थास्यति न वा इति निर्णयः प्रत्यक्षज्ञानमपेक्षते । इदम् : hit (प्रा. इं.) > it - इत्यत्र प्रथमान्तिमरूपयोर्ह नास्ति; मध्यमे त्वस्ति । परवर्तिनि कालेऽयं शब्दः id, hid, et इत्यादिभ्यः कतमरूपेण कस्मिन् समये प्रयोक्ष्यते, इत्यस्योत्तरं भविष्यत्काल एव दातुं समर्थः । 'इदम्' इत्यस्य पुरातनरूपमपि तमोग्रस्तम् । इदम्, it इत्येतयो- र्मध्ये यानि रूपाणि सन्ति, तेषां सर्वेषामप्याकलनमसम्भवम् ।

'कष्ट'शब्दात् प्राकृते समुत्पन्नं 'कट्ठ' इति रूपं वीक्ष्य यदि तात्कालिका भाषाविज्ञानिनः "संस्कृतकष्टशब्दश्चिराय गतः, भविष्यत्काले 'कट्ठ' इति वा तिष्ठेत्, अष्टशब्दोत्पन्न -'आठ' (ओ.) इतिवत् 'काठ' इति वा भवेत्, अथवा 'काट' इत्यादिकं रूपमेव गृह्णीयात्" इति कल्पितवन्तः, तर्हि तेषामनुमानं दुष्टमेव स्यात् । अतः साम्प्रतं प्राकृतोत्तरासु ओडिआ-हिन्द्यादिभाषासु तत्समः कष्टशब्द एव प्रयुज्यते । प्राचीनतरे कालेऽस्य शब्दस्य रूपं कीदृशमासीदिति भूतकाल एव जानाति ।

इत्थमनेकपथगामिनी भाषा केन पथाऽग्रे सरिष्यति, तन्निर्णयः पूर्वं कर्तुं न शक्यते । विकल्पास्तु विधीयन्त एव ।

## २३. परिवर्तनस्य स्थूलगतिरनुमातुं शक्या, न तु सूक्ष्मगतिः

परिवर्तनरीतिपरिचये सति स्थूलत एव शब्दानां परिवर्तन-सीमा ज्ञाताः स्युर्येन कानिचित् सम्भाव्यपरिवर्तनानि कल्पयितुं शक्येरन्, न तु इदमित्थमिति परिवर्तननिर्धारणं कर्तुं पार्येत । परिवर्तनेन

लब्धानि रूपाणि वीक्ष्य परिवर्तनपद्धतिः सामान्यतोऽवगन्तुं शक्या, सामञ्जस्यवतो वर्णांश्च परीक्ष्य तत्तत्परिवर्तनप्रवणता आकलिता भवेत्। एतद्विषयस्य स्पष्टीभावार्थमनुपदं दीयमानो दृष्टान्तोऽवधानमर्हति—

औषधस्य सुरक्षार्थं काचनिर्मितकुतुपस्य मुखविलमानानुसारेण यथोत्तरं स्थूलतरमेवंविधं पिधानं निर्मीयते, येन जलं किमुत, वायुरपि तन्मध्ये प्रवेष्टुं न शक्नोति । यः कोऽपि कारुर्भवतु, पिधाननिर्माणार्थमनूनाधिकं तदेव मानं तेन ग्रहीतव्यम् । पिधाने विलमुखमानादधिके पिधाननिम्नभागस्य तत्राप्रवेशः स्यात्, ऊने तु पिधानं काचकुतुपविलस्य मुखेऽवस्थातुमशक्नुवानं सत् गर्भं प्रविशेत् ।

किन्तु घण्टापथ एवं विस्तृतो भवति यत् कश्चित् तस्य वामांशेन, कश्चिद्दक्षिणांशेन, कश्चिद्वा मध्यांशेन गमनागमनं विधत्ते । एतेषां त्रयाणामप्यंशानां विशालत्वात् केनाप्यंशेन वारं वारं गच्छन् जनः तस्यांशस्य निर्दिष्टभागेनैव प्रतिवारं गच्छतीति कल्पना प्रमादपूर्णा स्यात् ; मार्गस्य तदंशानां च विशालत्वेन चलन् जनो यादृच्छिकभावेन कदा कस्यांशस्य केन भागेन गतिं कुर्यादिति निर्धारणाभावात्। काचकुतुपविलस्य संकीर्णत्वात् तन्मानेन निर्मितस्य पिधानस्य गतिः सर्वदैव समाना; घण्टापथस्य तु विशालत्वात् तदपेक्षया क्षुद्रस्य मानवस्य तन्मार्गेण गतिर्विविधांशोपांशावलम्बित्वादसमानैवेति तात्पर्यम् ।

उच्चारणमार्गो घण्टापथसदृशः, न तु काचकुतुपविलसदृशः । आभ्यन्तरो वायुरस्य मार्गस्य पथिकः । एतन्मार्गस्यादिभागेऽधिजिह्वा, मध्ये जिह्वा, प्रान्ते चोष्ठौ सन्ति । ते वर्णोच्चारणार्थमेतन्मार्गेण गच्छन्तं वायुं स्व-स्व-स्थानेषु विविधभावेन नियन्त्रयन्ति । अधिजिह्वाया एकविधेन नियन्त्रणेन अनुस्वार उत्पद्यते, अन्यविधेन अनुनासिकाः, तदन्यविधेन च अननुनासिकवर्णाः । जिह्वाया विभिन्नो भागोऽपि विविधभावेन एतस्मिन् पथि गतिशीलः सन् वायोः स्वच्छन्दां गतिं विविधभावेन नियन्त्रयति, येन ओष्ठ्येतरा वर्णाः परस्परतो भिन्नं रूपं धारयन्ति ।

विविधवर्णोच्चारणसमये ओष्ठावपि विविधमात्रया कदाचिद्वर्तुलीभूय कदाचिद्वा विस्तृतीभूय मार्गमिमं नानारूपं विधत्तः। आभ्यां विविधा ओष्ठ्यवर्णा अपि सृज्यन्ते। सूक्ष्मातिसूक्ष्मभावेन परिवर्तनशीलां जिह्वोष्ठस्य विभिन्नां गतिमाश्रित्य वायुर्विविधवर्णसृष्टौ निमित्तीभवतीति कदाचिदेकेन प्रयत्नेनोच्चारणे क्रियमाणे तत्प्रयत्नस्य परिवर्तेन सजातीयप्रयत्नान्तरं संपद्यते, येन उद्दिष्टवर्णोच्चारणं न भवति, समानं वर्णान्तरं चोच्चार्यते। सजातीयानां प्रयत्नानां बाहुल्यात् कदा कदा कस्को वर्णः परिवर्तनेन आपतेदिति कथनं कठिनमेव।

परन्तु निश्चितरूपेण तत्रेदं वक्तुं शक्यं यत्—निर्दिष्टायतनविशिष्टेन मार्गेण गच्छतो गतिर्यथा तदायतनमध्य एव सीमिता भवति, न तु तदतिक्रामति, तथा कंचिद्वर्णमुच्चारयितुं यतमानेन स वर्णः स्वसजातीयकतिपयनिर्दिष्टवर्णेभ्यः कश्चिद्वोच्चार्यते, न तु यः कोऽपि वर्णः। तथाहि प-मुच्चारयितुं यतमानः पं मम्, अथवा तत्सजातीयं फं बं वोच्चारयति, न तु न-ल-तादिकं यं कमपि वर्णम्। सामञ्जस्यभाजां वर्णानां परिचये परिवर्तनस्य सूक्ष्मगतेरननुमानासम्भवेऽपि स्थूलगतिः सुविज्ञाता भवेत्, येन शब्दाच्छब्दान्तरस्य निर्गमनपद्धतिः कयाचिन्मात्रयाऽवगन्तुं शक्येत।

## २४. परिवर्तनवेगस्य ऊनाधिकत्वम्

वर्णपरिवर्तनस्य वेगः सर्वत्र नैकविधः। बहुषु कालेषु गतेष्वपि कस्मिंश्चिच्छब्दे कश्चिद्वर्णः अपरिवर्तितस्तिष्ठति। अपरः शब्दस्तु तत्कालाभ्यन्तरे परिवर्तनं लभते। पाठगमनादिसंस्कृतशब्दा हिन्दी-बेङ्गाली-ओड़िआ-प्रभृतिषु अपरिवर्तिता एव व्यवह्रियन्ते। नो : no इत्यादावपि न कोऽपि वर्णः परिवर्तितः। मातृ>माँ (हि.), मेये (बे.), माआ (ओ.) : mother, madam इत्यादिषु म-स्य अपरिवर्तनेऽपि इतरवर्णानां परिवर्तनमुपलभ्यते।

क्वचित् तावतैव कालेन न केवलमेकं परिवर्तनम्, अपि च परिवर्तनस्यापि परिवर्तनं जायते। क्वचिच्च भूयः परिवर्तनं जायते।

यथा- सागर>साग्गर ( म. प्रा. ), शण>छण (ओ.) इत्यादिषु एकमेव परिवर्तनं जातम् । उपाध्याय>उबाध्याय (असि.) > ओवाध्याय (असि.)>ओआध्याय (असि.)>ओध्याय (असि.)>ओझाय (असि.)> ओझाय् (असि.)> ओझा (हि.)> झा (हि.) इत्यादौ च बहूनि परिवर्तनानि।

कस्मिंश्चिच्छब्दे कस्यांचिच्च भाषायां भेदमात्रायामूनायां प्रायशः स एव शब्दः सैव भाषेति च कथ्यते। यथा—अङ्कुसवत् अङ्कुसोऽपि संस्कृतशब्द एव। याउअछि (ओ.)>याउछि (ओ.)>याउचि (ओ.)— एते त्रयोऽपि ओडिआशब्दाः। शारलादाससमयात् क्रमशः परिवर्तमाना ओडिआभाषा ओडिआभाषेव। किन्तु परिवर्तनमात्राधिक्यवशात् 'हात'-शब्द ओड़िआशब्द एव; न तु हस्तशब्दवत् संस्कृतशब्दः। अर्धमागधी-प्राकृतं बहुलपरिवर्तनादेव अर्धमागधीत्वं विहाय ओडिआ इति नूतनभाषाऽभवत्। क्वचित् परिवर्तने स्वल्पेऽपि मूलभाषायां ग्रहणाभावात् कश्चिच्छब्दस्तद्भाषाशब्द इति न गृह्यते। यथा—गमन>गमण (म. प्रा.); भूल (हि.)> भुल (ओ.) इत्यादयः।

एषु परिवर्तनवेगतारतम्येषु सामाजिकभौगोलिकादिपार्थक्यं हेतुर्भवति। किन्तु भाषाभाषिक्षेत्रस्य व्यापकत्वात् भाषाप्रवाहस्य कुटिलत्वाज्जटिलत्वाच्च इदमित्थमिति निर्णयः कर्तुं नैव शक्यते।

## २५. विविधभाषासु परिवर्तनविशेषाणामसमतया प्रवृत्तिः

सर्वाणि परिवर्तनानि सर्वासु भाषासु समानरूपेण न गृह्यन्ते। कस्यांचिद् भाषायां परिवर्तनस्य कश्चित्प्रकारः प्रचुरमात्रया, तदन्यस्यां च भाषायामल्पमात्रया दृश्यते।

(१) संस्कृते यत्र घोषमहाप्राणस्तिष्ठति, ग्रीक्-लैतिनभाषयो-स्तत्समान्तरालशब्दे सर्वत्रैव संपृक्तः अघोषमहाप्राणस्तिष्ठति। यथा - धूमः : thumus (ग्री.); नभस् : nephos (ग्री.); बाधः : pathos (ग्री.); भरति (वे.) : fero (ले.); भवति। अयं परिवर्तनप्रकारो न केवलं ग्रीक्-

लेतिनभाषयोः धूमः : thumus(ग्री.) fuam(लै.)इत्यादौ प्रचुरमात्रयोपलभ्यते, अपि च पैशाचीप्राकृतेऽपीति प्राकृतप्रकाशाज् ज्ञायते[८०]। यथा—मेघः > मेखो(पै.प्रा.); निर्झरः > णिच्छरो(पै.प्रा.); माधवः > माथवो(पै.प्रा.); सरभसम् > सरफसं (पै. प्रा.); शलभ > सलफो (पै. प्रा.)। संस्कृतेऽपीदं परिवर्तनं कयाचिन्मात्रया दृश्यत एव। यथा— मधुरा > मथुरा; नाधते > नाथते; घघति > कखति; झमति > छमति; धुर्वति > थुर्वति; घवते > खवते; इत्यत्र प्रत्येकं पदयुगलं समानार्थकमिति एकमन्यस्य परिवर्तितं रूपमिति सम्भाव्यते। तद् यदि प्रथमोपात्तपदेभ्यो द्वितीयोपात्तपदानि निर्गतानि न स्युस्तदा इमान्यपि अघोषमहाप्राणेभ्यो घोषमहाप्राणरूपेण परिवर्तनस्योदाहरणानि भवेयुः।

(२) महाराष्ट्रीप्राकृते सर्वत्र संस्कृत - न-स्य स्थाने णत्वं भवति[८१]। इदं परिवर्तनं संस्कृतेऽपि वर्तते[८२], किन्तु न्यूनमात्रया। यथा-रघु नाम् (असि.) > रघूणाम्, नर एन (असि.) > नरेण, परि + नाम > परिणाम।

एकस्यामपि भाषायां किञ्चित् परिवर्तनं बाहुल्येन किञ्चिच्च कादाचित्कत्वेन भवति। यथा- वाक् + ईश > वागीश, महत् + दानम् > महद्दानम् इत्यादिषु बहुषूदाहरणेषु संस्कृते अघोषस्थाने घोषो दृश्यते। तद् + त्व > तत्त्व इत्यादीन्यल्पान्यप्युदाहरणानि सन्ति घोषस्थानेऽघोषरूपेण परिवर्तनस्य।

इत्थं कानिचित् परिवर्तनानि कुत्रचिन्महता परिमाणेन कुत्रचिच्च स्वल्पेन परिमाणेन दृश्यन्ते।

---

८०. वर्गाणां तृतीय-चतुर्थयोरयुजोरनाद्योराद्यौ— प्रा. प्र. (१०।३)

८१. नो णः सर्वत्र— तत्रैव (२।४२)

८२. रषाभ्यां नो णः समानपदे—अष्टा. (८।४।१)

## २६. आगमलोपधर्माणो वर्णाः

प्रकृतौ प्रत्यये वा असन्तः केचिद्वर्णाः शब्दे दृश्यन्ते। तान् वैयाकरणा आगमवर्णानाचक्षते। यथा—अभवत् इत्यत्र अ (ट्); भविता इत्यत्र इ (ट्); अवोचत इत्यत्र उ (म्); आगत्य इत्यत्र त् (उक्)। असन्त एते शब्दमागच्छन्तीत्यागमनाम्नः सार्थक्यम्।

तथैव सतां वर्णानामपगमो लोपः। यथा—गम् > जग्मतुः इत्यत्र अ-लोपः। हन् > हतः इत्यत्र न-लोपः।

अत्र सन्दर्भे प्रयुक्तावागमलोपौ लक्षणोदाहरणदृष्ट्या क्वचिद् व्याकरणीयागमलोपाभ्यां समानौ, क्वचिच्च भिन्नौ, यत्सम्पर्कात् केचिद्वर्णा आगमलोपधर्माणो व्यपदिश्यन्ते। स्वरयन्त्रश्वासयोः स्वाभाविकस्थितौ वर्णोच्चारणं न जायते। तस्याः प्राथमिकविकृतौ जायमानो वृद्धिस्तर आगमः, पुनः स्वाभाविकस्थितिसंपादकः अन्तिमः क्षयस्तरश्च लोप इति व्यपदिश्यते। अनयोः स्तरयोर्हि यथाक्रमम् असतो वर्णस्य शब्दमध्ये प्रवेशात् प्रथमतयोच्चारणम्, सतो वर्णस्य अपगमाच्च उच्चारणाभावः- इत्युभौ पूर्णतया भवतः, न त्वांशिकतया। तेन क-स्य ख-रूपग्रहणे महाप्राणांशस्य वृद्धिर्भवतीति ख-स्य क-रूपग्रहणे तस्यैव महाप्राणांशस्य क्षयश्च भवतीति इमौ आंशिकवृद्धिक्षयौ अत्र प्रतिपाद्ययोरागमलोपयोर्विषयौ न भवतः।

लोपपूर्ववर्ती उच्चारणस्तर आगमस्तरेण समानः। यत उभावपि स्तरौ अनुच्चारणसमयोचितयोः स्वरयन्त्रश्वासप्रवाहयोः स्वाभाविकस्थितेरीषद्विकृत्या निष्पन्नौ। सद्योजातस्य अलब्धविकासस्य शिशोर्यादृशी शक्तिः, मरणाभिमुखस्य जीर्णेन्द्रियस्य वृद्धस्य तादृश्येव शक्तिः। तथाऽत्रापि विवेचनीयम्। शिशुर्जायते, तत एव वर्धते। जन्मार्थं यावती वृद्धिरपेक्ष्यते, तावती शिशुना गर्भे लब्धैव। परन्तु जन्मकालस्थितिः साधारणस्थितिरिति गृह्यते, यामाश्रित्य वृद्धिक्षयौ कालेषु संपद्येते। एवमागमेन शब्दं प्रविशन् वर्णः आगमस्तरीयत्वात् साधारणस्तरीयः, आगमात्परं च वृद्धौ वृद्धिस्तरीयः, क्षये च क्षयस्तरीय इति कल्पनीयम्। यद्यपि आगमस्तरोऽपि वृद्धिस्तरीय एव, तथापि इतरवृद्धिस्तराद्

भेदप्रदर्शनार्थमागमस्तर इति नामितम् । ख-आदयो वर्णाः क-चादिषु महाप्राणांशस्य वृद्ध्या निष्पन्ना इति न ते आगमवर्णव्यपदेशमर्हन्ति, किन्तु आगमवर्णेषु क-चादिषु वृद्ध्यैव तेषां निष्पत्तिर्भवतीत्याकलनीयम् । एवं ख-आदिभ्यो जाताः क-चादयः क्षयस्तरीया भवन्ति । यथा × 7क>ख इति वृद्धिक्रमः, तथा ख>क> × इति क्षयक्रमः । क आगमेनायाति, लोपेन च लीयते । अतः क-चादय आगमस्तरीया लोपस्तरीयाश्च भवन्तीति अत्र ते आगमलोपधर्मकत्वेन व्यपदिश्यन्ते ।

न केवलमागमलब्धस्य क्षयलब्धस्य वा वर्णस्य वृद्धिक्षयौ भवतः, शब्दे मौलिकभावेन स्थितस्य वर्णस्यापि । यथा— अप्सराः>अफ्सराः । अत्र स्थितस्य प-स्य वृद्ध्या फः । युध्>युद् । अत्र स्थितस्य ध स्य क्षयेण दः ।

उदीयमानस्य सूर्यस्य प्रथमाः प्रशान्तकिरणाः क्रमशस्तीव्रा जायन्ते, ततश्च दिनावसाने प्रभातोचितां प्रशान्ततां पुनर्धारयन्ति । वृद्धिक्षयशीलानां वर्णानामेतदनुरूपा गतिः । स्वरयन्त्रश्वासयोः स्वाभाविकस्थितेरीषत्परिवर्तनेन ये वर्णा उच्चारयितुं शक्यन्ते, त एव कदाचित् कस्मिंश्चिच्छब्दे प्रवेशं लभन्ते । ततस्तेषां क्वचिद्वृद्धिर्भवति । एवं वृद्धिस्तरात् क्वचित् क्षयो भवति, उच्चारणाभावात्मको लोपो यस्यान्तिमः स्तरः । अस्मादेवानुच्चारणस्तरादागमः प्रादुर्भवति । पार्थक्यं तु— आगमात्पूर्वं प्रागभावात्मकमनुच्चारणम्, लोपे च प्रध्वंसाभावात्मकम् ।

यथैव सूर्योदयात्प्राक् अस्तमनाच्च परमन्धकारमयी स्थितिः, तथैवागमवर्णस्यागमनात्प्राक् लोपसन्निहितस्य स्तरस्य च लोपे सैवैकाऽनुच्चारणमयी स्थितिः । अनेनैव प्रकारेण उदीयमानस्य अस्तं व्रजतश्च सूर्यस्य स्थितिर्यथैका, तथा आगमस्तरक-लोपसन्निहितस्तरक-वर्णयोः । अत्र विशेषस्तु— यथा सूर्यकिरणानां प्रागभावात्परम् अतीव्रा, तीव्रा, पुनरतीव्रा च स्थितिः, ततः प्रध्वंसाभावः - इत्येते प्रत्यहमेव भवन्ति, नात्र तथा ।

(क) अत्र हि पूर्वविवेचनानुसारेण क-चादयः केचिदेव वर्णा आगम-लोपधर्मका भवन्ति, न तु ख-छादयः।

(ख) ते च प्राङ्षष्ठः७प्राङ्क्षष्ठः इत्यादिषु केषुचिदेव स्थानेषु, न तु प्राङ्मुख इत्यादिषु।

(ग) क-चादिषु केचित् कुत्रचिदागमस्तर एव विश्राम्यन्ति, नान्यत्परिवर्तनं लभन्ते। यथा- आगत्य इत्यत्र तः।

(घ) केचिच्च अन्यपरिवर्तनं लभन्ते। यथा- प्राङ्षष्ठः७प्राङ्क्षष्ठः७प्राङ्ख्षष्ठः। अत्र कागमो भूयः परिवर्तनेन खो भवति।

(ङ) सर्व एव वर्णाः क्षयस्तरं प्राप्नुवन्तीति न; ज्ञापयतीत्यत्र हि पः, चतुर्थ इत्यत्र थश्च क्षयं नाप्नुतः।

(च) येऽपि क्षयस्तरं स्पृशन्ति, तेषु केचिन्मध्ये विश्राम्यन्ति, न तु पूर्णक्षयात्मकमनुच्चारणस्तरं व्रजन्ति। यथा— व्यध्+त>विद्ध। अत्र ध-गतमहाप्राणांशक्षयात् दो भवति। किन्तु तस्य द-रूपेणैव विश्रामः, न तु पुनः क्षयेण लोपः।

(छ) केचिच्च पूर्णक्षयं यान्ति। यथा—वधू>बोहू (प्रा.)७बोउ (प्रा.)। अत्र ध्७ह्>× इति क्रमेण पूर्णक्षयः।

(ज) केचिद् वृद्धिमारुह्य क्षयमवरोहन्ति। यथा—हृहृ अ (असि.)७झहृअ (असि.)>जहार (ह्>झ>ज)।

(झ) केचित् क्षयमारुह्य वृद्धिमारोहन्ति। यथा— अग्निमथ्+सु(प्)७अग्निमत्सु>अग्निमथ्सु[८३]।

(ञ) वृद्धिक्षयौ तथा आपद्य केचित् अन्तिमक्षयस्तरं लोपं व्रजन्ति। यथा— दृह्+त७दृढ्ढ (असि.)> दृड् ढ (असि.)>दृढ। (ह्७ढ्>ड्७×)। अत्र व्याकरणदृष्ट्या साक्षात् ढस्य लोपः,[८४] भाषातत्त्वदृष्ट्या तु क्रमशः।

---

८३. द्र. भा. टी. २।१०

८४. ढो लोपः—अष्टा. (८।३।१३)

सूक्ष्मतया विचारे ड: क्षयमागमं वा नार्हति। घोषाणां ग-ज-ड-द-बानामुच्चारणं हि स्वरयन्त्रमार्गावरोधे संभवति। मार्गानवरोध-स्थितिस्तु स्वाभाविकी यथा अघोषाः क-च-ट-त-पा उच्चार्यन्ते। अतो ग-ज-ड-द-बानां लोपागमौ क-च-ट-त-प-माध्यमेनैव, न तु साक्षात्। तेनात्र ह् > ढ् > ड् > ट् > × इत्येव समुचितः परिवर्तनक्रमः। एवं सत्यपि प्रथमतृतीयवर्ग्यवर्णानां समस्तरकत्वात् इमं भेदमवहेल्य प्रचलितव्याकरणानुशासनानुसारेण अत्र तृतीयवर्णानामप्यागमत्वं प्रदर्शितम्।

ङ-ञ-ण-न-मास्तु ग-ज-ड-द-ब-वद् घोषा अपि तेभ्यो विलक्षणाः। एषामुच्चारणे मुखनासिकोभयमार्गेण निःसरन् वायुप्रवाहो मुखविवरे ऊनो भवति। तेन ग-ज-ड-द-बानामुच्चारणे उच्चारणस्थानेषु यावानाघातो भवति, न तावानेषामुच्चारणे। अतो ग-ज-ड-द-बापेक्षयाऽत्र न्यूना विकृतिर्जायते। अनेनैव हेतुना एतेषां स्वरसादृश्यं वर्णविज्ञाने विवेचितम्,[८५] अन्तस्थवर्णेषु च ग्रहणं कृतम्[८६]। एतत्सर्वमेषां स्वरान्तस्थ-वत् आगमलोपवर्णत्वसाधकम्। पाणिनिरपि ङ् (उट्), ण् (उट्), न् (उट्), म् (उक्) इत्येषामागमं[८७] न-म-योर्लोपं[८८] चानुशास्ति। यद्यपि व्यवहारवैरल्यात् अस्यागमो ङ-ञ-णानां लोपश्च संस्कृते न दृश्यते, तथापि इतरानुनासिकसाजात्यात्तेषामप्यागमलोपवर्णत्वम्।

---

८५. व्यञ्जनोंमें से निरनुनासिक स्पर्श स्वरध्वनियों के पूर्णतः विपरीत तथा असदृश होते हैं। परंतु नासिक्य व्यंजन अपनी कोमलताके कारण स्वरोंसे अधिक सादृश्य रखते हैं— ध्वनिविज्ञान (पृ. १४४)

८६. आदिम भा. यू. भाषामें य्, व्, र्, ल्, न्, म् ये छः अन्तस्थ माने गये हैं—संस्कृतका भाषाशास्त्रीय अध्ययन (पृ. ४९)

८७. ङमो ह्रस्वादचि ङमुण् नित्यम्, आने मुक् — अष्टा. (८।३।३२, ७।२।८२)

८८. अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति— तत्रैव (६।४।३७)

इयं चर्चा न केवलं महाप्राणांशघटितानां ख-छ-ठ-थ-फ-घ-झ-ढ-ध-भानामागमलोपधर्मकत्वं निराकरोति, स्वरयन्त्रविकृत्या जायमानानां ग-ज-ड-द-बानामपि । झभ ( ञ् ), घढध ( ष् ), जबगडद (श्), खफछठथ............इति रूपेण एकत्र माहेश्वरचतुःसूत्र्यामेषां सन्निवेश एतत्तथ्यमूलक इत्यनुमिनुमः ।

इत्थं वर्ग्येषु क-च-ट-त-प-ङ-ञ-ण-न-मा एवागमलोपवर्णाः । यत्तु व्याकरणे एतद्भिन्ना वर्णाः क्वचिदागमलोपवर्णरूपेण कथिताः, तत् स्वोद्देश्यसिद्धौ साधु । भाषातत्त्वज्ञैस्तु तत्र आगमप्रसङ्गे प्रथममुपस्थितानामत्र विविच्यमानानामागमवर्णानां परिवर्तनेन तादृशरूपप्राप्तिः स्वीकर्तव्या, लोपस्थले तु क्रमपरिवर्तनेन लोपसन्निहितस्तरप्राप्त्यनन्तरमेव लोप इति विचारणीयम् । अथवा पूर्वोक्तं कार्यार्थं द्रुतं चलतो जनस्य प्रथमपदक्षेपस्थानमुल्लङ्घ्य द्वितीयपदक्षेपस्थाने पाददानन्यायं, प्रेष्यपत्त्राहिधूमशकटस्य केषुचित् पूर्वकेन्द्रेष्वविश्रामन्यायं च अत्र प्रयुज्य व्याकरणोक्त आगमलोपस्तरः प्राथमिकस्तरातिक्रमेण लब्धः परोक्षस्तर इत्याकलनीयम् । तथाहि—

(क) षष्ठः, तावतिथः, बहुतिथः इत्यत्र डट्प्रत्यये परे यथाक्रमम् थ् (उक्), इथ् (उक्), तिथ् (उक्) इत्यागमा अष्टाध्याय्यामुक्ताः[८९] । तत्र साक्षात् थकारागमो नोपपद्यते । तकारागमानन्तरं वृद्ध्या थत्वमत्र कल्पनीयम् । किं च एकाधिकवर्णस्य युगपत् प्रवेशः प्रारम्भिके आगमस्तरे नैव समीचीनो भवति । तत्र क्रमश एकैकवर्णागमः कल्पनीयः । वस्तुतस्तु एते थ-इथ-तिथाः प्रत्यया एव, व्याकरणीयाभिसन्धिना तथा नोक्त्वा सागमप्रत्ययरूपेण व्यपदिष्टाः ।

(ख) एकादनविंशतिरित्यत्र अद् (उक्) इत्यागमः पाणिनिना विहितः[९०] । स च एकाधिकवर्णघटितत्वात् द-घटितत्वाच्च प्रागुक्त-

८९. षट्कतिकतिपयचतुरां थुक्, वतोरिथुक्, बहुपूगगणसंघस्य तिथुक् । —तत्रैव (५।२।५१, ५।२।५३, ५।२।५२)

९०. एकादिश्चैकस्य चादुक्—तत्रैव (६।३।७६)

प्रकारेण आगमो नोपपद्यते । नूनमत्र एकस्मात् (एकसंख्याहेतोः) न विंशतिरिति विग्रहे 'एकस्मात्' इति सर्वनामरूपस्थाने 'एकात्' इति असर्वनामरूपम्, ततः अलुक्समासः, ततश्च सन्धौ त-स्य दत्वम्-इत्येतानि भवन्तीति प्रतीमः । एतत्सकलप्रतिपादनार्थमेकाधिकनूतनसूत्रकल्पने गौरवं वीक्ष्य पाणिनिस्तत्त्वविश्लेषणमुपेक्ष्य लघुनोपायेन शब्दं साधितवान् ।

(ग) ष् ( उट् ) इत्यागमस्तु षट्थ्सन्तः इत्यनिष्टरूपनिवारणार्थं इति प्राक् (वि. २१) प्रतिपादितम् । तेनात्रागमक्रम उल्लङ्घितः ।

(घ) दृढ इत्यत्र लोपक्रममनादृत्य साक्षात् ढलोपविधाने लाघवेन शब्दसाधनमेव हेतुः । इत्थं स्थलविशेषेषु व्याकरणस्य प्रतिपादनमन्यत्, भाषातत्त्वं चान्यदिति विवेचनीयम् । तेन कतिपया एव वर्णा आगमलोपधर्मका इति निष्कर्षः । ते तावत् २२ संख्यकाः । यथा—

(क) स्वरेषु अ-इ-उ इत्येव । ऋ-लृ-ए-ऐ-ओ-औ इत्येते तु नात्रान्तःपतन्ति, एकाधिकांशघटितत्वात् ।

(ख) अननुनासिकव्यञ्जनेषु क-च-ट-त-प-य-व-र-ल श-ष-सा विसर्गश्च । द्विगुणितो विसर्गो हो भवतीत्युक्ते[९१] विसर्ग एवागमलोपवर्णः, न तु वृद्धिरूपो हः ।

(ग) स्वरव्यञ्जनोभयगता नासिक्या अप्यत्रान्तर्भवन्ति । ते यथा- अनुस्वारो ङञणनमाश्च । चन्द्रबिन्दुस्तु नासिक्य एव, किन्तु न वर्णः, आनुनासिक्यधर्मरूपत्वात् । यथाक्रममेषामुदाहरणानि दीयन्ते । तत्र वामे आगमा दक्षिणे च लोपाः प्रदर्श्यन्ते ।

---

९१. विसर्ग एव प्रक्षुब्धः प्रयत्नद्विगुणत्वतः ।
हकारो नाम विश्वेषां व्यञ्जनानां प्रसूतिकृत् ॥ —मुकुन्दरामटिप्पणी
( तन्त्रसारस्य तृतीयाह्निके १५ पृष्ठस्था )

## १. अ

स्तृ (वै.)—तारा
क्ष्मा—क्षमा
म्ना—मनति
घर्म—गरम (ओ.)
उत्तृस्त—अतरछ (ओ.)
जन्म—जनम (ओ.)
कर्म—करम (ओ.)
स्वर्ग—सरग (ओ.)

पत् (वै.)—पप्तिम (वै.)
वद् (वै.)—उपब्दि (वै.)
आत्मना (वै.)—त्मना (वै.)
पतत्र—पत्त्र
क्षतत्र—क्षत्त्र
अपिधान—पिधान
प्र-दा-त—प्रत्त
ऊर्ध्वजानु—ऊर्ध्वज्ञु
गम्—जग्मतुः
हन्—घ्नन्ति
घस्—जक्षतुः
राजन्—राज्ञी
प्रगेतन—प्रत्न
नूतन—नूत्न
अरितृ—ratis (लै.)
अरण्य—रण्ण (म. प्रा.)
जानु—knee
अधर—under
दन्त—tooth
बदरी>बद्री (हि.)
जनमेजय—जन्मेजय (ओ.)
नरक—नर्क (ओ.)

## २. इ

लिख्—लिखित
भवति—बबइति (जे.)
रिणक्ति—इरिणक्ति (जे.)
स्त्री—इत्थी (म. प्रा.)
स्वप्न—सिबिण (म. प्रा.)
अहम्—आमि (बे.)

एमसि (वै.)—एमः
तिष्ठति—अतिष्ठत्
परिषद्—पर्षद्
तुरीय—तुर्य
ग्रन्थि—gland
hinoy (गॉ.)—hnoy (ग.)
चारिअणा (ओ.)—चारणा (ओ.)
करिला (ओ.)—कला (ओ.)
देखिला („)—देख्ला (संब. ओ.)

## ३. उ

तर्तृ (वै.)— तरुतृ (वै.)
वर्तृ ( „)— वरुतृ (,,)
तन्वम् („)—तनुवम् (,,)
नख— unguis (लै.)
पद्म— पदुम (म. प्रा.)
स्मरति— सुमरदि (शौ. प्रा·)
(भ्रातुष्) पुत्र— पुतुरा (ग्रो.)

नु वै—न्वै
गुरु— gravis (लै.)
उपवीत— पइता (ग्रो.)

## ४. क

प्राङ्षष्ठः— प्राङ्क्षष्ठः
राजन् ईय(असि.)—राजकीय
अस्मद्+आम्— अस्माकम्
कलस—calix (लै.)
स्पश— spex (,,)
पर्शु— falx (,,)
मिश्र— mix
षष्— six
vois (प्रा. फ्रे.)—voix (फ्रे.)
vitailler(„)—victual(मध्य. इं.)
voirdit (,,) —verdict
parfit (मध्यइं)— perfect

केटति— एटति
कम्— amo (लै.)
कृमि— vermus (लै.)
कृष— verrdo (लै.)
क्षिप— sipo (,,)
कपि— affo (प्रा. ज.)
कपि— ape
भक्त— भात (हि.)
ऋक्ष— रीस (म.)
डाकिनी—डाआणी (ग्रो.)
नकुल—नेउल (,,)
देवकुल—देउल (,,)
नक्तम् — natter (ना.)
राजकुल— राउल (,,)
octo (लै.)— otto
victorio (लै.)—vittorio

## ५. च

शिव+छाया— शिवच्छाया
वि+छेद— विच्छेद

चतुर्थ— तुर्य
मोचन—मोअण (म. प्रा.)
वचन— वअण ,,
सूचना— सूअणा ,,
लोचन— लोअण (अव.)
सूची— सुई (हि.)

६. ट

| | |
|---|---|
| सुगण्+षष्ठः— सुगण्ट् षष्ठः | अत्रोदाहरणं नोपलभ्यते । |

७. त

| | |
|---|---|
| भूरिदावतर(वै.)—भूरिदावत्तर(वै.) | अदुह्लत (वै.)—अदुह्ल (वै.) |
| इतरम् (वै.)— इतरत् | क्षतत्र— क्षत्र |
| सन्सः— सन्त्सः | पत्त्र— पत्र |
| वि-जि॰(ल्)य(प्)—विजित्य | हैमन्त (असि॰)— हैमन |
| कृ+(क्)य(प्)— कृत्य | पुत्त्र— puer (ले.) |
| गण्— count | नपात्— nefa (प्रा. इ.) |
| हन्— hunt | भ्रातृ— bror (दा.) |
| | उत्फाल—उप्फाल (म. प्रा.) |
| | विद्युत्— बिज्जु ,, |
| | जगत्— जग (हि.) |
| | पित्तल— पितल (ओ.) |
| | उत्थल— उथुला (,, ) |
| | उत्कट— उकुटा (,, ) |
| | मत्कुण— उकुणि (,, ) |
| | aestimare (ले.)— aesmer (लै.) |
| | frater (ले.)— frere (फ्रे.) |
| | art (प्रा. इ.)— are |
| | part take— partake |
| | listen— लिसन् (इ.) (उच्चारण) |

८. प

| | |
|---|---|
| अयस्मय (वै.)— अयस्प्मय (वै.) | पिबामि— ibim (प्रा. आइ.) |
| पत्— अपप्तत् | नूपुर— णेउर (म. प्रा.) |
| अटति— पटति | |

अठारह (हि.), अठर (ओ)। अत्र संस्कृतशब्दगत आकारः हिन्दीभाषायामस्ति, ओडिआभाषायां तु नास्ति। समीपवर्तिनः सतर(ओ.) (<सप्तदश) शब्दस्य प्रभावात् तत्र आ-स्थाने अः। एवं सप्तत्रिंशत् > सइँतिरिश (ओ.) इत्यत्र अनुनासिकध्वनिः अनुचितोऽपि समीपवर्तिनः पइँतिरिश (ओ.) (< पञ्चत्रिंशत) इति समीपवर्तिसंख्याप्रभावाज्जातः। एवम् अग्नामारुतशब्दे 'अग्ना' इत्यत्रत्यः आकारः अयौक्तिकोऽपि इन्द्रावरुणादिप्रयोगसाहचर्यात् जायते।

एतानि परिवर्तनानि वस्तुतः सादृश्याभासजन्यानि। परन्तु सादृश्याभासस्य इतरोदाहरणेभ्यो विलक्षणतया सहचारिशब्दप्रभावः इति स्वतन्त्रमधिकरणं कृतम्।

## ४३. समीभावो विषमीभावश्च

एतावत्पर्यन्तं वर्णादीनां प्रकृतेः पारिपार्श्विकपरिस्थितेश्च प्रभावात् यानि वर्णपरिवर्तनान्युदाहृतानि, तानि समीभावं सूचयन्ति। रामः करोति > रामᳵकरोति इत्यत्र हि जिह्वामूलीयः ककारः कण्ठ्यं विसर्गं जिह्वामूलीयार्धविसर्गरूपेण विपरिणमय्य आत्मना समीकरोति। अन्येष्वप्युदाहरणेष्वियमेव गतिः।

किन्तु पारिपार्श्विकपरिस्थित्या वर्णस्य विषमीभावोऽपि भवति। यथा— पृथिवी>पुहवी (म. प्रा.)। अत्र मध्याक्षरगत इकारः अन्त्याक्षरगतेन ईकारेण विषमीभावमापद्य अकारो जातः। गुरु > गरु (ओ.) इत्यत्रापि परवर्णगतस्योकारस्य प्रभावेण पूर्ववर्णगत उः विषमीभूय अः भवति। यथा वा—तिन्तिडी > तिन्तुली(ओ.)। अत्रापि अन्त्याक्षरगतेन ईकारेण विषमीभूय मध्याक्षरगत इकारः उकारः संवृत्तः। अधुना ओडिआभाषायां 'कालिन्दी' इत्यस्य स्थाने 'कालन्दी' इति कथ्यते। इदमपि विषमीभावस्योदाहरणम्।

एषु परवर्णप्रभावः स्पष्टः। पूर्ववर्णप्रभावो यथा— पुरुष> पुरिसो (म. प्रा.)। अत्र प्रथमाक्षरगतस्य उकारस्य प्रभावात् द्वितीयाक्षरगतस्य उकारस्य विषमीभावेन इत्वम्। उभयपार्श्वप्रभावो यथा—(प्रीति>)

पिरीति>पिरति (ग्रो)। अत्र प्रथम-तृतीयाक्षरगतयोः इकारयोः प्रभावात् द्वितीयाक्षरगत ईकारो विषमीभूय अकारो जातः। एवं militalis (लै.)> militaris (लै.)। अत्र प्रथम-लो द्वितीय लं विषमीभाव्य रं करोति।

समीभावस्य क्षेत्रं विशालं विषमीभावस्य च लघु। कस्मिंश्चिच्छब्दे एतयोरेकः प्रवर्तिष्यते, न वा-इति पूर्वं कथयितुमशक्यम्। उदाहरणं दृष्ट्वैव एतयोर्मध्ये कस्य प्रवृत्तिर्भवति कस्य न वेति विज्ञायते।

## ४४. स्थितिविनिमयः

वर्णविनिमयादन्यो वर्णस्थितिविनिमय इति वर्तते। यदि एकशब्दगतौ कौचिद् वर्णौ स्वस्थानमुत्सृज्य परस्परस्थानं गच्छतस्तदा तत्र स्थितिविनिमयो जात इति वक्तुं शक्यते। यथा— हिंस्>सिंह। अत्र ह-सौ परस्परस्थानं गतौ। यथा वा— इव>विअ। अत्र इकाराकारौ अन्योऽन्यस्य स्थानं गतौ। एवं चलु>चउल (ग्रो.), मलिआ (ग्रो.)> मइला (ग्रो.) इत्यादयः। स्थितिविनिमयस्य स्थितिपरिवृत्तिः[३५], विपर्यय[३६] इति वा प्राचीनैः कृतं नाम। केचिच्चेदं वर्णपरिवर्तनमिति कथयन्ति। परन्तु कस्यचिद्वर्णस्य स्थाने वर्णान्तरप्रयोगरूपार्थेऽपि वर्णविपर्यय-वर्णपरिवर्तनसंज्ञे व्यवहर्तुं शक्येते, यदर्थे वर्णविनिमय इत्याख्या सन्दर्भेऽस्मिन् प्रदत्ता। अतः कुत्रचिदेते संज्ञे भ्रान्तिमापादयेतामिति बुद्ध्या स्थिति-विनिमय इति नाम अत्र प्रदत्तम्। शब्दस्य एकस्मिन् स्थाने वर्णविनिमयो भवति, स्थितिविनिमयस्तु स्थानद्वयमपेक्षत इति तयोर्भेदः।

अनेकाक्षरघटिते शब्दे वर्णानामानुपूर्व्या उच्चारणं कदाचिद्दुष्करं भवति। अत्र हेतुस्तावत्-कुत्रचिदानुपूर्वी नैव स्मर्यते, स्मरणेऽपि वा कुत्रचिच्छीघ्रातिशीघ्रमुच्चारणे तस्या भङ्गो भवति। कस्यचिच्छब्दस्य प्रयोगे यदि विरला उच्चारयितार आनुपूर्वीभङ्गं कुर्वन्ति, तर्हि तादृशः प्रयोगोऽशुद्ध इति गण्यते। न तं प्रयोगं शिक्षितसमाजोऽङ्गीकरोति। परं तु क्रमशो-

---

३५. सिंहो वर्णविपर्ययात् — सि. कौ. (१०३६ सूत्रस्था)

३६. करेण्वां रणोः स्थितिपरिवृत्तिः —प्रा. प्र. (४।२८)

ऽधिकाधिकेषु जनेषु तादृशमानुपूर्वीभङ्गं कुर्वत्सु स शब्दः शुद्ध इति गृह्यते, कियत्कालपर्यन्तं मूलशब्दस्य वैकल्पिक इति च स्वीक्रियते। यथा—बुड (ओ.) (<ब्रुड)>डुब (ओ.)। अत्रोभावपि शब्दौ वैकल्पिकभावेन प्रयुज्येते।

कुत्रचिन्मूलशब्दस्य प्रयोगस्तिरोभवति, तत्स्थाने च स्थितिविनिमयलब्धः शब्दः प्रयुज्यते। यथा—नालिकेर (<नलिका)>नारिकेल। अत्र नालिकेरशब्दो लुप्तः।

कुत्रचिन्मूलभाषायां मौलिकशब्दः, तद्भवभाषायाम् अथवा सामञ्जस्यवहायामर्वाचीनभाषायां स्थितिविनिमयलब्धशब्दः प्रयुज्यते। यथा—करेणुः>कणेरू (म.प्रा.); शल्क : scale चिन्त् : (>तिञ्च्>तिङ्क्) think; बुध्न : fundus (लै.); कारवेल्ल>करला (संब. ओ.)>कलरा (ओ.); signal>सिङ्गल (ओ.)। आद्योदाहरणे महाप्राणत्वापगमेन ध-स्य दत्वे तस्य न-स्य च मध्ये स्थितिविनिमयः।

यदा प्रायशः समवर्णघटितयोः शब्दयोरेकतरस्य वर्णास्तदितरशब्दं संक्रामन्ति, तदाऽपि स्थितिविनिमयशब्दः प्रयोज्यः। यथा— He tenders his apology इति वक्तव्ये He standards his apology इत्युक्तिः। अत्र tender, standard इति शब्दयोर्वर्णसाम्यादेकतरशब्दे प्रयोक्तव्ये तदितरशब्दप्रयोगः। इत्थम् he had wasted a whole term इति वक्तव्ये he has tasted a whole worm इत्युक्तिः। Malaprop-नामधेयस्य पात्रस्य भाषायामीदृशव्यवहारप्राचुर्यादिदं Malapropism इत्याचक्षते[३७]। ओडिआ-भाषायाम् उमा रडुछि इति वक्तव्ये यदि कश्चित् रमा उडुछि इति कथयेत्, तदा अयमस्योदाहरणं भवेत्। अयमपि स्थितिविनिमयस्य विषयः।

Oxford-स्थ-Dr. Spooner-कृतशब्दप्रयोगे यादृश आनुपूर्वीभङ्गो भवति, तादृशानुपूर्वीभङ्ग स्तन्नामानुसारेण spoonerism इत्याख्यायते[३७]। यथा— well-oiled bycycle इत्यस्य स्थाने well-boiled icycle इति

---

३७. द्र. Elements of the Science of Language (Sect. 65, P. 188)

प्रयोगः। यथा वा—two bags and a rug इत्यस्य स्थाने two rags and a bug इत्युक्तिः। ईदृशप्रयोगस्य भाषायां ग्रहणाभावेऽपि स्थितिविनिमयस्य बीजमत्र निहितमिति विवेचनीयम्।

क्वचिद्वर्णांशोऽपि स्वस्थानं विहाय स्थानान्तरं गच्छति। यथा—बुध्>भुद्भ्याम्; भगः : बघो (जे.); घटित>गठित (ओ.)। एषु महाप्राणांशस्य ह-स्य स्वस्थानादपगमो जातः। धारा>दाढा (म. प्रा.) इत्यत्र ध-स्य महाप्राणांशो धं विहाय र-स्थानापन्नेन डे-न मिलित्वा ढ-रूपमापन्नः।

इत्थं स्थितिविनिमयः वर्णांशम्, एकशब्दगतं च वर्णमाश्रित्यावतिष्ठते।

## ४५. अवशङ्गमवर्णाः

यथा केषाञ्चित् साधूनां खलसङ्गत्याऽपि खलप्रभावपाताभावात् खलत्वं न भवति, केषाञ्चित् खलानां च साधुसंसर्गेऽपि साधुप्रभावपाताभावात् साधुत्वं न भवति, तथा कश्चिद्वर्णोऽपि आसन्नवर्णेन अप्रभावितत्वात् स्वीयमुच्चारणमव्याहतं रक्षति; न तु परिवर्तते। अत्र बाह्यप्रभावोपरि व्यक्तित्वस्य विजयो भवति। स्पर्शव्यञ्जनात्परं स्पर्शेतरव्यञ्जने वर्तमाने आस्थापितत्वं भवतीति शौनकस्यानुशासनम्। आ=सम्यग्भावेन स्थापितत्वादेवात्र पूर्वस्य परस्य वा वर्णस्य परिवर्तनं न भवति। अतएव ईदृशसन्धिः अवशङ्गमसन्धित्वेन तत्रोक्तः। स खलु वर्णोऽवशङ्गमः, यः कस्यचिदपि वर्णान्तरस्य वशं न गच्छति—इति तदभिप्रायः।

ऋक्प्रातिशाख्ये केवलं स्पर्शस्य तदितरव्यञ्जनसान्निध्य एव अवशङ्गमत्वस्वीकारात् अर्थसङ्कोचमूलके योगरूढत्वे तत्र कल्पितेऽपि अपरिवर्तनभाजां सर्वेषां वर्णानां बोधोऽत्राभिप्रेतः, यौगिकार्थसमाश्रयात्। तेन षट्+पुस्तकानि= षट्पुस्तकानि, वाक्+तत्र= वाक्तत्र इत्यादिरपि अवशङ्गमत्वस्य विषयः। किं च लीला, दास इत्यादिशब्देष्वप्यवशङ्गमत्वमस्त्येव। यतोऽत्र कोऽपि वर्णान्तरसान्निध्यकृतं परिवर्तनं नैव लभते। यथा—द्वादशशब्दस्य प्रभावस्तन्निकटवर्तिनि एकादशशब्दे पतितः अकारम्

कुरुते, न तथा द्वाविंशतिशब्दस्य प्रभावः एकविंशतिशब्दगतमकारमाकाररूपेण परिवर्तयितुं समर्थः। अत्रापि एकविंशतिशब्दस्य अवशङ्गमत्वं द्रष्टव्यम्। इत्थमत्र समीभाव-विषमीभाव-स्थितिविनिमया न भवन्ति, न वा मिथ्या-सादृश्य-सहचारिशब्दयोः प्रभावः पतति।

## ४६. अन्तरङ्गं बहिरङ्गं च परिवर्तनम्

शंसितेषु वर्णपरिवर्तनेषु केवलमुच्चारणस्थान-बाह्याभ्यन्तरप्रयत्नेषु केषाञ्चिद् भेदो यत्र प्रकाशते, करणस्य (जिह्वाया ओष्ठस्य वा) च यत्र भेदो नास्ति, तदन्तरङ्गपरिवर्तनमिति कथयितुं शक्यते। तत्र हि परिवर्तनस्य कानिचित्कारणानि परिवर्त्यमानवर्णानाश्रयन्ति, कानिचिच्च बाह्य-परिस्थितिम्। यथा—वाच्+इन (वै.)>वाजिन (वै.) इत्यत्र पूर्वपरस्थयो-र्घोषयोः आ-इ-वर्णयोः प्रभावः अघोषं चं घोष-ज-रूपेण परिणमयति इति अयं बाह्यप्रभावः। स च घोषस्तालुस्थानकः, स्पृष्टोऽल्पप्राणश्च भवति, परिवर्त्यमान-च-साधर्म्यादित्ययमाभ्यन्तरः प्रभावः। एतौ मिलित्वा चं जं कुरुतः। अप्सराः>अफ्सराः इत्यत्रापि परवर्णस्य स-स्य प्रभावेण महाप्राणत्वे कर्तव्ये प-स्य ओष्ठ्यत्वाघोषत्वस्पृष्टत्वाविरोधेन फो भवति। ईदृशेषूदाहरणेषु यस्य वर्णस्य यद्वर्णभावेन परिवर्तनं भवति, तयोरुभयोरपि जिह्वैककरणत्वादन्तरङ्गत्वं वक्तुं शक्यते। यत्र परिवर्तने करणभेदस्त-द्भवति बहिरङ्गपरिवर्तनम्। करणभेदे नियतमेवोच्चारणस्थानस्य परिवर्तनं भवति। यथा—प्रशाम्>प्रशान्। अत्र ओष्ठस्थानकरणकस्य म-स्य स्थाने दन्तस्थानको जिह्वाकरणकश्च नो भवति। एव श्रूयते>शुभे (ओ.) इत्यादौ जिह्वाकरणकस्य वर्णस्य स्थाने ओष्ठकरणको वर्णो द्रष्टव्यः। एतद्विवेचनानु-सारेण धूमः, thumus (ग्री.), dumacha (प्रा. आइ.) : fumus (लै.); धेना : femina (लै.); रुधिर, eruthrus (ग्री.) : rubrus (लै.); द्वार : fortis (लै.)-इत्यत्र तवर्ग्याणां पवर्ग्यरूपेण परिवर्तनं बहिरङ्गपरिवर्तनं भवितुमर्हति।

---

३८. स्पर्शाः पूर्वे व्यञ्जनान्युत्तराणि
आस्थापितानामवशङ्गम तत् —ऋ. प्रा. (४।१)

(१) शब्दसाहचर्यजन्यं (२) सादृश्याभासप्रयुक्तं (३) स्थिति-विनिमयाख्यं चेति त्रीणि परिवर्तनानि उदाहरणदर्शनात्परमेव 'इदमित्थ'-मिति निरूपयितुं शक्यानि, न तु ततः पूर्वम्। नापि तदनुकरणेन उदाहरणान्तराणि कल्पयितुं शक्यन्ते। तथा हि 'एकादश'शब्दं दृष्ट्वैव 'द्वादश'शब्दप्रभावेण आकारस्तत्रागत इति कल्पयितुं शक्यते। 'एकादश'-शब्दवत् आकारघटितं शब्दान्तरं नैव कल्पयितुं शक्यम्। अन्तरङ्ग-परिवर्तने तु न तथा; जगदीशशब्दवत् वृहद्भानु-पृषदश्वादीनि बहून्युदाहरणानि वर्णस्याभ्यन्तरकारणानुसारेण कल्पयितुं पार्यन्ते।



# चतुर्थः परिच्छेदः

## शब्दनिर्गमः

### ४७. निर्गमकल्पनायां विविधानि असौकर्याणि

वर्णपरिवर्तनस्य निर्णयार्थं न केवलं भाषाणां परिशीलनम्, व्याकरणाभिधानभाषाविज्ञानादीनां चाध्ययनमावश्यकम्, परन्तु निर्वचन-शास्त्रगतानि वैशिष्ट्यान्यपि समाकलनीयानि । अन्यथा क्वचिद् भ्रान्तिः समुदियात् । यथा—देउळ (ओ.) शब्दः देवालयशब्दान्तर्गत इति कल्पयितुं शक्यते । वर्णपरिवर्तनदृष्ट्या च नात्र किमप्यसामञ्जस्यम् । परन्तु देवालयस्य समपर्यायो देवकुलशब्दोऽपि वर्तते, यस्मात् 'देउल'शब्दनिर्गम-कल्पनाऽधिकं सामञ्जस्यं लभते । पुत्तार्थकः पुअ (ओ.) शब्दः पुत्तशब्दात् पोतशब्दाद्वा निष्पन्न इति विषये सतर्कं विवेचनमावश्यकम् । पोतशब्दात् पुअ (ओ.) शब्दनिष्पादनं वर्णपरिवर्त्तनदृष्ट्या लघु, अर्थदृष्ट्या तु न लघु । यथा— पोतः = शिशुः > पुत्तशिशुः > पुत्तः । पुत्तशब्दात् पुअ (ओ.) इत्यस्योत्पत्तिकल्पनायां तु अर्थपरिवर्तनगौरवं नास्तीति सत्यम्, परन्तु पुत्त > पुत्त > पुत > पुअ इति दूरप्रसारी वर्णपरिवर्तनक्रमोऽभ्युपेयः । ईदृश्यां स्थितावत्र अर्थपरिवर्तनमार्गो ग्राह्यः शब्दपरिवर्तनमार्गो वा इति विवेकिभिः कुशाग्रीयबुद्ध्या परीक्षितव्यम् । अत एतदर्थं निर्गमशास्त्रनिर्दिष्टरीतीना-मन्वीक्षणमपरिहार्यम् । अतोऽस्मिन् परिच्छेदे निर्गमविषयकाः केचिद्विचाराः संक्षेपेण उपस्थाप्यन्ते ।

यस्य शब्दस्य परिवर्तनं भवति, स निर्गमकशब्दः, परिवर्तनेन च यः शब्दो निष्पद्यते, स निर्गतशब्दः । निर्गमव्यापारस्तु उभयसाधारणः ।

निर्गतशब्दो निर्गमकशब्दश्च क्वचित् एकस्या एव भाषायाः शब्दौ । यथा—हरि + चन्द्र > हरिश्चन्द्र । क्वचिन्निर्गमकशब्दस्यभ ाषाऽन्या,

निर्गतशब्दस्य चान्या। यथा—प्रतिपद्>पडिवआ (म. प्रा.)। इत्थमेक-भाषागतशब्दानां बहुसंख्यया परिवर्तनेन सृष्टा भाषा निर्गतभाषेत्यभिधीयते। यथा— हिन्दी शौरसेनीप्राकृतनिर्गता भाषा।

निर्गमः प्रत्यक्षः परोक्षो वा भवति। यथा— बंक (म. प्रा.)> बङ्का (ओ.)। अयं साक्षान्निर्गमः। वक्र>बंक (म. प्रा.)>बङ्का (ओ.)। अयं तु संस्कृतदृष्ट्या परोक्षनिर्गमः। एवं संस्कृतात् मराठीभाषा महाराष्ट्री-प्राकृतमाध्यमेन जातेति सोऽयं परोक्षनिर्गमः।

निर्गमप्रतिपादकशास्त्रं निर्गमशास्त्रं, निर्वचनशास्त्रं, निरुक्तम् ( etymology ) इति वाऽभिधीयते। शब्दनिष्पत्ति-( derivation ) शास्त्रं, व्युत्पत्तिशास्त्रमिति च अस्य नामान्तरद्वयम्।

कस्याश्चिद्भाषाया भाषान्तरनिर्गमप्रतिपादकानि कानिचिद् व्याकरणानि लिखितानि। यथा— वररुचिकृतः प्राकृतप्रकाशः। अत्र संस्कृतशब्देभ्यः प्राकृतशब्दानां निष्पत्तिप्रकारः प्रकाशितः। कस्याश्चिद्भाषाया एकस्मात् तदधिकाद्वा शब्दात् तस्या एव भाषायाः शब्दान्तरसृष्टिप्रतिपादनं व्याकरणैः साध्यते। यथा—मकर>मस्कर, पर+पर>परस्पर इत्यादि संस्कृतव्याकरणादुपलभ्यते, advise>advice, no+either>neither इत्यादि च इङ्ग्लिशव्याकरणात्।

परन्तु व्याकरणानि निर्गमस्य दिग्दर्शकान्येव। कस्याश्चिद्भाषायाः सर्वे शब्दा न तैः साधयितुं शक्यन्ते। पाणिनीयव्याकरणे शब्दसाधनायां व्याकरणान्तरापेक्षया विशदायामपि न तद्व्याकरणं पूर्णाङ्गमिति वक्तुं शक्यम्। पाणिनिर्हि वैदिकशब्दानाम्, स्वसमये उपलब्धानां संस्कृतशब्दानां च साधनार्थमुद्यमं कृतवान्, परन्तु न पूर्णतया साफल्यमधिगतवान्। अत्र निदर्शनानि तावत्—

(क) केषुचित् सूत्रेषु 'बहुलम्' इति शब्दस्य प्रयोगः[1]। बहुलशब्दस्य हि चत्वारोऽर्थाः— (१) कुत्रचित् (सूत्रस्य तत्प्रतिपादित-कार्यस्य वा) प्रवृत्तिः, (२) क्वचित् अप्रवृत्तिः, (३) क्वचित् प्रवृत्तिरप्रवृत्तिर्वेति

१. यथा- बहुलं छन्दसि, कृत्यल्युटो बहुलम्—अष्टाध्यायी(२।४।७२, ३।३।११३)

विकल्पः, (४) क्वचिच्च ( न तत्सूत्रस्य तत्सूत्रप्रतिपादितस्य वा कार्यस्य, अपितु ) कार्यान्तरस्य प्रवृत्तिः[२]। उदाहरणपरिशीलनं विना प्रवृत्त्यादिभ्य-श्चतुर्भ्यः कुत्र कतमद् भवतीति केवलसूत्रेण ज्ञातुं न शक्यम्। यथा—स्नान्त्यनेनेति स्थानीयं चूर्णमित्यत्र भाव-कर्म-व्यतिरिक्ते विषये जायमानस्य अनीयर्-प्रत्ययस्य दर्शनानन्तरमेव तत्र पाणिनिसूत्रोक्ता अनीयर्-प्रत्यय-प्रवृत्तिः[३] कल्प्यते, न तु यस्य कस्यचिददृष्टशब्दस्य अनेन सूत्रेण कल्पनं शक्यते। तस्माद् गच्छन्त्यनेनेति गमनीयं यानमिति कल्पनं प्रमादपूर्णमेव स्यात्। पाणिनिरेतत्प्रवृत्त्यादिचतुष्टयस्य पृथक् पृथक् क्षेत्राणि स्वसूत्रैः सम्यक् प्रदर्शयितुं न शशाक; केवलं 'बहुल'शब्दं प्रयुज्य कार्यं निरुवाह।

(ख) पाणिनिसूत्रेषु प्रयुक्तो 'विभाषा'-शब्दो विकल्पार्थमाह। यथा—'विभाषा ङिश्योः' (६।४।१३६)। अनेन सूत्रेण अ-लोपो विकल्प्यते। तेन 'दध्नि' इत्यत्र अलोपो भवति, 'दधनि' इत्यत्र च न भवति। अत्र एकस्मिन्नेव शब्दे कार्यं भवति, न भवति च। किन्तु कुत्रचित् केवलं भवति, अन्यत्र च केवलं न भवति—'विभाषा'-शब्दस्य एतादृशार्थोऽपि स्थलविशेषेषु क्रियते। ईदृशी विभाषा व्यवस्थितविभाषेत्युच्यते[४]। तेन गो+अक्षः>गवाक्षः इत्यत्र अवङ्[५] नित्यभावेन ( न तु वैकल्पिकभावेन )

---

२. क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः
क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य
चतुर्विधं बाहुलकं वदन्ति॥ —ल.सि.कौ. (७७२ सूत्रस्था)

३. कृत्यल्युटो बहुलम् —अष्टा. (३।३।११३)

४. क्वचित् भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचि-दुभयमिति लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थित-विभाषा। —बालमनोरमा (सि. कौ. ८८तम सूत्रस्था)

५. अवङ् स्फोटायनस्य —अष्टा. (६।१।१२३)

भवतीति पक्षो गृह्यते । ईदृशस्थलेष्वपि शब्दप्रयोगमविलोक्य केवलं सूत्रज्ञानेन न कार्य्यसिद्धिः ।

(ग) केषाञ्चिच्छब्दानां साधुताज्ञानार्थं शिष्टप्रयोग एव शरण-मिति सूत्रे[६] कथनमपि पाणिनेस्तत्तच्छब्दसाधने अपाटवं प्रकाशयति ।

केषाञ्चित्कठिनशब्दानामर्थबोधो व्याकरणेन न भवति । तदर्थं निरुक्ताध्ययनमावश्यकम् । तत्र हि केषाञ्चित् कठिनशब्दानां निर्वचनं विद्यते, निर्वचनपद्धतयश्चानुशिष्टाः ।

परिवर्तनस्य वैचित्र्यात् केषाञ्चिच्छब्दानां निर्गमनकल्पनं नैव सुकरम् । वर्णार्थयोः सामञ्जस्यमाधृत्य हि प्राचीनशब्दात् नवीनशब्दनिर्गमः कल्प्यते । प्राचीनताया नवीनतायाश्च चिह्नं कस्मिंश्चिदपि शब्दे नास्तीति गवेषकेण स्वीयानुसन्धानबलेन प्राचीनस्तन्निर्गतो नवीनश्च शब्दः सप्रमाणं निर्णीयते । एवं सति केषुचिन्निर्णयेषु प्रमादो भवत्येव । उद्दिष्टो हि शब्दः असंख्यातेभ्यो भाषाप्रवाहेभ्यः कतमस्मान्निर्गत्य कं कं भाषाप्रवाहं प्रविश्य उद्दिष्टे आधुनिकभाषाप्रवाहे स्थानमध्यगमदित्यस्य तात्त्विकविवेचनं कठिनम्, कुत्रचिदसम्भवं च । तथा हि केवलं भारोपीयपरिवारगतभाषाणां मूलनिर्गमे जिज्ञासिते तदर्थम् अधुनोपलभ्यमानाः संस्कृत-प्राकृत-पालि-अपभ्रंश-ओडिआ-हिन्दी-बेङ्गाली-महाराष्ट्री-प्रमुखा भारतीयभाषाः, जेन्दा-दयो विविधकालोद्भवाः पारस्यभाषाः, ग्रीक्-लैटिन्-गथिक्-जर्मानी-फ्रेञ्च्-रास्सिअन्-इङ्गलिश-प्रभृतयः पाश्चात्यभाषा इति कतिपयाः प्राचीन-मध्ययुगीया-धुनिकभाषा एव आधारीक्रियन्ते, न तु सर्वाः । यतो हि मूलभाषानिर्गताः काश्चिद्भाषा मृताः, काश्चिच्चार्धमृताः । अन्याः काश्चिदधुना नूतनतया भाषाभ्यो निर्गच्छन्ति; भविष्यत्काले च कासांचिदुत्पत्तिः संभाव्यते । यदि एकत्रैव एकदैव एकस्यैव समीपे सर्वासां निर्गमक-निर्गत-भाषाणामुपलब्धिः स्यात्तदा भाषापरिवर्तनानि अभ्रान्तभावेन स निर्णयात् ।

---

६. पृषोदरादीनि यथोपदिष्टम् —तत्रैव (६।३।१० )

परन्तु अयं महतोऽसौकर्यस्य विषयो यत् एकस्य जनस्य समक्षमेकस्या भाषाया एकाधिकानां कासाञ्चिदेव भाषाणां वा केचनैव शब्दा उपस्थिता भवन्ति। कस्यापि पुरतः स्वमातृभाषाया अपि सर्वे शब्दाः, प्रतिशब्दं च विविधानि वैकल्पिकानि रूपाणि नोपस्थितानि भवन्ति। केवलं स्वपरिसरे मौखिकभावेन व्यवहृतान् पुस्तकपत्त्पत्रिकाभ्यश्चाहृतान् कांश्चिच्छब्दान् परित्यज्य नेतरान् ज्ञातुं स प्रभवति।

इदं तु व्यवहृतसमीपस्थभाषाविषयकम्। अव्यवहृतानां दूरे व्यवहृतानां च भाषाणां बोधे महत् खल्वसौकर्यम्। यतस्ताः पुस्तकादेव शिक्ष्यन्ते। आचार-विचार-शिक्षादीनामनैक्यात् परस्परतो भिन्नानां जनसमुदायानां जीवनस्य बहुषु क्षेत्रेषु व्यवह्रियमाणाया भाषायाः पूर्णतया प्रातिनिध्यं सम्पादयितुं पुस्तकगताः सीमिताः शब्दा अक्षमा एव। यानि पुनर्भाषारूपाणि अधुना प्रचलनाभावात् विलुप्तानि, तेषामाकलनमसम्भवमेव। अन्यदसौकर्यमपि वर्तते। तद् यथा—

केवलं पुस्तकगतानि जनसाधारणस्य कथितभाषाया अङ्गानि न भवन्ति; किन्तु शिक्षितानां साहित्यिकभाषारूपाणि। जनसाधारणस्य भाषा हि उपेक्षिता सती लिपिबद्धा न भवति। अनया दिशा विचारे ज्ञायेत यत्, ग्रीक्-लैतिन् प्रभृतिभाषाणां ये शब्दास्तात्कालिकसाहित्याभिधानेषूपलभ्यन्ते, तेषु बहवो जनभाषाशब्दा न स्युः। तात्कालिकसाधारणजनताव्यवहृतशब्दावलीज्ञानार्थमुपायो नास्ति। प्रकृते तु या भाषा परिवर्तमाना भाषान्तररूपं धारयति, सा तावत् साधारणजनताया भाषा। साधारणजनताया उच्चारणसामर्थ्यं भाषापरिवर्तने कारणं भवति। शिक्षिताः प्रथमं प्रथममिममशक्तिजमुच्चारणवैषम्यं भाषायां नाङ्गीकुर्वन्ति। परन्तु क्रमशस्तादृशोच्चारणस्य बाहुल्येन प्रयोगे तद् गृह्णन्ति। अस्मात् कारणात् साधारणजनतायाः कथितभाषा तुलनाक्षेत्रे यादृशमुपयोगिनी, न तथा साहित्यभाषा। साहित्यरूपे हि पुनर्विकासः स्थगितो भवति। साहित्यभाषया शिक्षितेषु भावं प्रकाशयत्सु जनभाषा क्रमशो रूपान्तराणि परिगृह्य विकासोन्मुखी भवति।

ग्रीक्-लेतिन्-प्राकृतापभ्रंशादिभाषासु साहित्यरूपं धारयित्वा स्थाणूभूतासु जनभाषा विकसन्ती अद्यतनकथ्यमानभाषा यावदग्रेसरीभूता। एतद्विवेचनालब्धा जनभाषानुपलब्धिर्भाषातुलनाक्षेत्रे सुमहान्तमन्तरायं सृजति।

इदमप्यसौकर्यान्तरं यत्—प्राचीनभाषाबोधार्थं प्रायशोऽभिधान-ग्रन्थानां साहाय्यमपेक्ष्यते। अभिधानेषु प्रायशः कस्यचिच्छब्दस्य विविधाञ्चलव्यवहृतानि सर्वाणि रूपाणि न सन्ति। यदि अभिधानेऽविद्यमानात् कस्माच्चिद्रूपात् कोऽपि शब्दो विकसितः स्यात्तदा तज्ज्ञानमभिधानग्रन्थं दृष्ट्वा नैव लभ्येत। 'किम्'-शब्दनिर्गतः ओडिआभाषायाः 'केउँ' इति शब्द उदाहरणार्थं गृह्यताम्। उत्कलीयेषु विविधेषु स्थानेषु अस्य शब्दस्य अधुना विविधरूपेण व्यवहारः, यथा— कउँ, केउँ, कोउँ, कोउ, को, कि, केन् इत्यादि। किन्तु १००० वर्षानन्तरं यदा ओडिआभाषा विकसिता सती अन्यरूपेण प्रचलिता स्यात्, अथवा स्वयं साहित्यभाषारूपेणावस्थानात् ओडिआतो विकसिताऽन्या भाषा जनभाषिताया ओडिआयाः स्थानमापन्ना स्यात्, तदा भाविनो भाषाविदः केउँ (ओ.) शब्दार्थे व्यवहृतं तात्कालिक-रूपं केउँ (ओ.) शब्दस्य कस्माद्रूपान्निर्गतमिति कल्पयितुं न पारयेयुः। यतस्ते ओडिआभिधानं दृष्ट्वा तत्र अधुना विविधाञ्चलेषु लिख्यमानानि कथ्यमानानि बहूनि रूपाणि न पश्येयुः। यद्रूपं पश्येयुस्तस्मादेव अगत्या तात्कालिकरूपनिर्गमकल्पनां कुर्युः। तथा सति क्वचिद् भ्रान्तिः स्यात्। यतः कस्यचिच्छब्दस्य कस्मिंश्चित्काले व्यवह्रियमाणेभ्यो बहुभ्य आञ्चलिक-रूपेभ्य एकतमस्मिन् तत्काले कस्माच्चित्कारणान्मुख्यतां प्राप्ते सत्यपि विकासस्तस्मादेव रूपाद्भवतीति नैव वक्तुं शक्यम्। धर्म-राजनीत्यादि-नेतुर्भाषामनुकर्तुं जना इच्छन्तीति नात्र सन्देहः। परन्तु तथाऽनुकृता भाषा कृत्रिमैव, न तु स्वाभाविकी। अतो विकासः कस्यचिच्छब्दस्य प्रमुख-प्रचलितरूपेतरस्मादपि भवतीति तादृशरूपाविष्करणं सर्वथा दुरूहमेव भाषाविदाम्।

परिवर्तनस्य बहुरूपता, बहुमुखी गतिः, पृथक् पृथक् पद्धत्या ह्रासविकासयोर्यादृच्छिकविवर्तनानि - एवमादिभ्यः कारणेभ्यो निर्गमधारा

कथमपि शृङ्खलिता भवितुं नार्हति । तस्मात् अमुकशब्दः अमुकशताब्द्याम् अमुकभाषाया निर्गत्य अमुकरीत्या अमुकसमये परिवर्तितः सन् अमुकामुक-भाषामाध्यमेनागत्य साम्प्रतममुकभाषायाममुकरूपं धारयति, तस्माच्च कारणात् अमुकसमयानन्तरम् अमुकरीत्या परिवर्तनमुपलभ्य अमुकरूपं धारयिष्यति-इतीदृश्याः कल्पनाया बहुक्षेत्रेषु अवास्तवत्वं सम्भाव्यते ।

## ४८. निर्गमकल्पनार्थं केचिज् ज्ञातव्या विषयाः

अत्र निर्गमशब्दः सामञ्जस्यस्योपलक्षणम् । तेन (१) निर्गमक-निर्गतशब्दविषयकं (२) तदभावे च केवलसामञ्जस्यशीलशब्दयुग्मविषयकं भवत्येतदधिकरणम् ।

एतत्पर्यन्तं निर्गमकशब्दान्निर्गतशब्दस्य वर्णपरिवर्तनजन्यो भेदश्चर्चाया विषयीकृतः, योऽस्य सन्दर्भस्य प्रतिपाद्यविषयोपयोगी । किन्तु अनपेक्षितवर्णपरिवर्तना निर्गमा अपि भवन्ति, यत्कल्पनाया विविधपद्धति-ज्ञानाभावे स्थलविशेषेषु अर्थबोधे सफलत्वं नाधिगम्यते ; प्रत्युत भ्रान्तिः समुदेति । यथा—आद्यन्तवर्णाभ्यां शब्दनिर्माणस्थाने no>numero (लै.) इत्यादौ । अतोऽत्र केचित् संपृक्ता ज्ञातव्या विषया उपस्थाप्यन्ते ।

(क) क्वचिद्विप्रकृष्टभाषाशब्देन सामञ्जस्यम्—

यत्र क्वचित्शब्दः सन्निकृष्टभाषाशब्दापेक्षया विप्रकृष्टभाषाशब्देन अधिकमन्तरङ्गत्वं दधाति, तत्र विप्रकृष्टभाषाशब्दादेव निर्गमस्य सामञ्जस्यस्य वा कल्पना विधातव्या । यथा— star-शब्दः ताराशब्दापेक्षया वैदिक-स्तृ-शब्देन अधिकं सामञ्जस्यं धारयतीति तेनैव सह सामञ्जस्यं दर्शनीयम् ।

(ख) पुनर्निर्मितशब्देन सामञ्जस्यम्—

प्राक्कालिकभाषायाः प्रचलितैः समान्तरालशब्दैः सह निर्गतशब्दस्य सामञ्जस्याभावे अप्रचलितशब्दस्यानुसन्धानेन लुप्तस्य वा शब्दस्य पुनर्निर्माणेन सामञ्जस्यं कदाचिद्भवितुमर्हतीत्येतत्परीक्षितव्यम् । यथा—

(१) व्यजनम्—धोकणा (संब.ओ.) । धुक्षणाशब्दोऽत्र कल्पनीयः ।

(२) 'छाया'शब्दे दन्त्यो दो नास्ति, यः पाश्चात्यभाषाणां

समान्तरालशब्देषूपलभ्यते । यथा—scead (प्रा. इ.), schade (मध्य. इ.), shade अथवा scadewoz, scadewa (प्रा. ट्यू.), scead(u)we, sceadu (मध्य. इ.)>shadow । अतः संस्कृतेऽपि दन्त्यवर्णघटितः कश्चिच्छब्दो नूनं छायाशब्दस्य निर्गमक आसीद्, योऽधुना नव्यवह्रियते—इति सम्भावनावसरे छादिताशब्दः कल्पनापथं प्रविशति । प्राकृते छादिताशब्दस्य द-त-लोपे[७] 'छाइआ' इति भवति; तत 'इः' स्वरपरकत्वात् 'यो' भूत्वा छायाशब्दं घटयति—इति कल्पना कर्तुं शक्यते । अर्थदृष्ट्या विचारेऽपि छाया-छादिता-शब्दयोः समानत्वम् । यतः सूर्यस्य चन्द्रस्य प्रदीपस्य वा मरीचौ केनचिद्वस्तुना छादितायां सत्यां छादकस्य आकृतिप्रमाणयुक्तो योऽन्धकारमयो भागो भवति, स छायेति कथ्यते ।

(३) व्याघ्रशब्दे दन्त्यवर्णो नास्ति, य एषु पाश्चात्यशब्देषु आद्यवर्णरूपेण वर्तते —tigris (ग्री. लै.), tigro (फ्रे. इटा.), tigre (प्रा. फ्रे.; मध्य. इ.), tiger । अतोऽत्रापि संस्कृते प्राग्व्यवहृतः दन्त्यादिः कश्चिच्छब्दोऽनुसन्धेयो यः शब्दार्थदृष्ट्या एभिः पाश्चात्यशब्दैः समानः स्यात् । अत्रापि द्व्याघ्रशब्दः कल्पनापथमवतरति । द्विः=द्विगुणितम् आजिघ्रतीति द्व्याघ्रः— इति विग्रहात् प्राप्तो द्विगुणाघ्रायकार्थो विशेषेणाजिघ्रतीति व्याघ्रः — इति विग्रहलभ्यार्थेन सह प्रायः समान एव । वर्णपरिवर्तनदिशाऽपि द्व्याघ्रशब्दात् व्याघ्रशब्दस्य निर्गमे न काऽपि बाधा वर्तते । संयुक्तवर्णस्याद्यांशभूतो दकारो हि बहुत्र लोपमेति । यथा— द्विसर (? द्वासर) (वै.)>वासर (वै.) । अत्र रात्रौ शीतेन दिवा चोष्णेनेति द्वाभ्यां सरतीति वासरशब्दस्य यास्ककृता व्युत्पत्तिः[८] । यथा वा— द्वितीय : बिथ्य (जे.) । द्वादश>बारह (म. प्रा.), मुद्गरः>मुग्गरो

---

७. कगजतदपयवां प्रायो लोपः —प्रा. प्र. (२।२)

८. द्वाभ्यां शीतोष्णाभ्यां रात्रिन्दिवमनारतं सरन्ति गच्छन्तीति वेसराणि सन्ति वासराणि भवन्ति । पृषोदरादित्वाद्वेबाभावो स्तः ।

—निरुक्तम् (४।१।७)

( म. प्रा. ) इत्यादिषु च संयुक्ताद्यांशभूतस्य द-स्य लोपः प्राकृतव्याकरणेऽनुशिष्टः[९] । उद्वर्तन>उबटना (हि.), उद्गार>उगलना (हि.), मुद्ग>मुग (ग्रो.) इत्यादयोऽप्यत्र तुलनामर्हन्ति ।

(४) विंशतिशब्दोऽपि दन्त्यवर्णाद्यैः पाश्चात्यसमान्तरालशब्दैर्न समानः । अत्र द्विशब्दात् दशत् (=दशसंख्यायाः समष्टिः, decade) इत्यर्थे शतिच्प्रत्ययः विन् च भवतीति भाष्यकथनं[१०] दृष्टिपथमायाति । विन्प्रत्ययगतस्य नस्यानुस्वारे विंशतिशब्दो भाष्यदिशा सिध्यति ।

वस्तुतोऽत्र न कश्चित्प्रत्ययो भवति । (द्विदशतयी>) द्विदशति (>द्विदशत्) शब्दस्यैव संयुक्तासंयुक्तदकारयोः असंयुक्त-द-स्थस्य अ-स्य च लोपे 'विशति' इति जाते अनुस्वारागमे 'विंशति' इति भवति । द द अ इत्येषां लोपः अनुस्वारागमश्च भाषाविज्ञानानुमोदितः ( अधि. २७ ) । स्वरलोपस्य[११] सस्वर-द-स्य लोपस्योदाहरणानि प्राकृते सन्ति । यथा—पादपतनम्>पाबडणं; पादपीठम्>पाबीढं[१२] ।

भाष्योक्तनिपातनं तु व्याकरणीयोद्देश्यमूलकम् । यत्र एकस्य लक्ष्यस्य साधनायां बहुसूत्रनिर्माणस्यावश्यकताऽनुभूयते तत्र वैयाकरणा गौरवभिया तथा न कृत्वा लाघवात् निपातनेन तस्य शब्दस्य सिद्धिं कुर्वन्ति । किन्तु भाषाविज्ञानिनो लाघवगौरवे अविचार्यैव यथाघटितं परिवर्तनं प्रकाशयन्ति ।

(५) नीड, nidus (लै.) : neossia (ग्री.), nest (स.,दा.,ज.,इ.), naesta (स्वी.), gniazdo (पो.), bnizdo (बो.) । अत्र समान्तरालशब्दतुलनायां कृतायां लैतिनवर्जं विभिन्नपाश्चात्यभाषासु स-त-योस्तत्स्थाना-

९. पा. टी. २।१७

१०. द्विशब्दादयं दशदर्थाभिधायिनः स्वार्थे शतिच्प्रत्ययो निपात्यते, विन्भावश्च । द्वौ दशतौ विंशतिः । —म. भा. (५।१।५९ सूत्रस्थम्)

११. द्र. सन्धावचामज्लोपविशेषा बहुलम् —प्रा. प्र. (४।१)

१२. द्र. सञ्जीवनी (४।१ सूत्रस्था)

पन्नवर्णयोर्वा दर्शनात् संस्कृतेऽपि स-त-घटितः शब्दस्तदर्थेऽन्वेषणीयः । अत्र 'निषत्' इति शब्दः कल्पनापथमेति, य 'उपनिषत्' इति शब्दस्याङ्गभूतो व्यवह्रियते । केवलस्य निषच्छब्दस्य प्रचलनाभावेऽपि निषीदन्ति = उपविशन्ति अत्रेति निषत्—इति विग्रहेण निषच्छब्दनिष्पत्तौ न काऽपि बाधाऽवलोक्यते । अत एव नीडशब्देन शब्दार्थदृष्ट्या तुल्यत्वात् निषच्छब्दो नीडशब्दस्य निर्गमक इति कल्पना नानुचिता भवेत् ।

(ग) क्वचित् सामञ्जस्यधारणाया अनुदयः —

मौलिकतद्भवयोः समान्तरालशब्दयोर्वा ज्ञाने सत्यपि कालक्रमेण परिवर्तनमात्राया आधिक्यवशात् अयं शब्दः एतस्मात् समुद्गतः, इमौ च सामञ्जस्यशीलौ—इति धारणा नोदेति । यथा— प्रदत्त>प्रत्त, बुध्न : bottom, उपाध्याय7झा (हि.), प्रभातिला (प्रो.)7पाइला (प्रो.) ।

(घ) विविधभाषातुलनं भ्रान्तिनिवारकम्—

केवलं शब्दसाम्यं वीक्ष्य निर्गमकल्पना सामञ्जस्यकल्पना वा न कार्या । सा हि कदाचिद् भ्रान्तिं प्रयोजयेत् । यथा — केचित् समिति-committee-शब्दयोः समान्तरालत्वं कल्पयन्ति । किन्तु commiss (फ्रे.)-commission-शब्दयोः 'mis' इत्यंशः प्रेषणार्थको वर्तते । किमपि कार्यं समाधातुं या व्यक्तिर्या वा गोष्ठी संप्रेष्या भवति, सा आभ्यां शब्दाभ्यामुच्यते । अत एतत्स्वारस्येन 'संप्रेष्या'-जातीयः कश्चिच्छब्दः committee इत्यस्य समान्तरालशब्दत्वेन कल्पनीयः । एवम्भूतस्थलेषु विविधसजातीय-भाषाशब्दतुलनं भ्रान्तिं निवारयेत् ।

(ङ) (i) असंबद्धत्वज्ञानेऽपि सम्बन्धकल्पनम्—

असत्यपि निर्गमसंबन्धे केचित् भाषान्तरशब्दं गृहीत्वा स्वोद्दिष्ट-भाषानुकूलं किञ्चित्परिवर्त्य व्यवहरन्ति, तस्य स्वोद्दिष्टभाषानिर्गतत्वं च प्रकाशयन्ति । यथा— सर्वकार-शब्दः शासकार्थे प्राग्व्यवहृतो नासीत्, परस्तात् भारते मुसलिमशासने प्रवर्तिते सति उर्दूभाषायां सरकार-शब्दं व्यवहृतं दृष्ट्वा केचित् संस्कृतानुकूलं तं परिवर्त्य 'सर्वकार' इति कृत्वा

शासकार्थे प्रयुज्यते । सर्वं करोतीति तेषां व्युत्पत्तिः । प्रकृते तु उर्दू भाषायां 'सर' इति शिरोऽर्थकः, स लक्षणया 'सर्वोच्च' इत्यर्थं धत्ते, 'कार' शब्दश्च कार्यार्थकः । एतच्छब्दनिर्माणं सर्वकारशब्दात् सरकारशब्दनिर्गमस्य भ्रममापादयति । एतादृशोऽन्यः शब्दः सुरत्राणो यः सुलतान इति उर्दू शब्दस्य संस्कृतीकृतं रूपम्[१३] ।

(ii) तद्भवभाषाशब्दाहरणम्—

अङ्गार > इङ्गाल (म. प्रा.), भर्तृ > भट्ट (म. प्रा.), पत्तन > पट्टण (म. प्रा.)-अलत्यास्तद्भवशब्दाः परकाले संस्कृते गृहीताः । एतद्ग्रहणं वामनेन समर्थितम्[१४] ।

(iii) विजातीयशब्दाहरणम्—

कुत्रचित् विजातीयभाषाभ्यः शब्दाः आह्रियन्ते । यथा—पिकः; नेमः; तामरसम् । इमानि पदानि भाषान्तरादाहृतानीति साधितं मीमांसादर्शने म्लेच्छप्रसिद्धार्थप्रामाण्याधिकरणे[१५] । यथा वा— कंग्रेस्; पेन्सिल् (भ्रो.);pandit; ghee इत्यादयः ।

(iv) भाषाद्वयांशाभ्यां शब्दसृष्टिः—

क्वचिदेकः शब्दो भाषाद्वयांशाभ्यां सृष्टः । यथा—शार्दूल < शार + दूल । अत्र 'शार' इति चित्रवर्णार्थकः संस्कृतशब्दः । दूल इति चर्मार्थकः अनार्यभाषाशब्दः । आभ्यां शार्दूलशब्दः सृष्ट इति सुनीतिकुमारचाटर्जी[१६] ।

(v) पर्यायवाचकशब्दगतवर्णसाङ्कर्यम्—

क्वचित् पर्यायवाचकस्य कस्यचिच्छब्दस्य कश्चिद्वर्णः शब्दं प्रविशति । यथा—लगुड-यष्टिशब्दौ समपर्यायौ । तत्र यष्टिशब्दात् यकारोऽपगच्छति,

---

१३. द्र. गङ्गाम्भसि सुरत्राण तव निर्याणनिःस्वनः ।
स्नातीवारिवधूवर्गगर्भपातनपातकी —साहित्यदर्पणः(प. १०, पृ.३१०)

१४. अतिप्रयुक्तं देशभाषापदम् —काव्यालङ्कारसूत्रवृत्तिः (५।१३)

१५. चोदितं तु प्रतीयेताविरोधात् प्रमाणेन (१।३।१०)

१६. द्र. तस्य मुद्रितम् उत्कलसंस्कृतसमितिसमावर्तनोत्सवे पुर्यां भाषणम् ।

तत्स्थाने लगुडशब्दस्य लकारः प्रविशति । तेन लट्ठि (म. प्रा.), लाठि (ओ.) इत्यादयः शब्दाः सृज्यन्ते । एतत्तत्त्वमनुक्त्वा प्राकृतप्रकाशकारः अत्र य-स्थाने लो भवतीत्याह[१७] ।

(vi) शब्दयोरेकीभावः—

कुत्रचित् मिलिताभ्यां द्वाभ्यां शब्दाभ्यामेकः शब्दो भवति । यथा—गाहनम्+आलोडनम्>गालोडनम्; hund (सा.)(ः शत)+red (=सङ्ख्या) (ग)=hundred; part+take>partake, jew+party>jeoparadise, no+ever>never; कब (हि.)+भी (हि.)>कभी (हि.), पाद (ओ.)+धुआ (ओ)>पाधुआ (ओ.); भिङ्क् (ओ.)+काढ (ओ.)>भोकाड (प्रा. ओ.) ।

अस्मिन् प्रसङ्गे—Jumpशब्दो गृह्यताम् । अस्य समान्तरालसंस्कृतशब्द-निरूपणावसरे 'दिवम्पत'शब्दो नः कल्पनापथमवतरति । अयं खलु एतच्छब्दा-नयनक्रमः-jump=जुम्प्(चतुःशतवर्षप्राक्तनमुच्चारणरूपम्)<जुम्पत्<द्युम्पत<दिउम्पत्<दिवम्पत्∠दिवम्पत । यथा दूरं गच्छतीति दूरङ्गमस्तथा दिवं पततीति दिवम्पतः । उभयत्रोपपदतत्पुरुषसमासः । वर्णपरिवतनदिशा द्युपितृ ः jupiter इत्यनेन समानमिदं समीकरणम् । प्रभेदस्तु jump इति आकाशोत्पतनार्थकम्, दिवम्पत इति तु आकाशोत्पतनवान् इत्यर्थकम् । अवश्यमत्र दिवम्पत् शब्दकल्पनायां कृतायां शब्दार्थोभयदिशाऽधिकं सामञ्जस्यं स्यात् । किन्तु पूर्ववर्तिनो द्वितीयान्तपदस्य परवर्तिना धातुना समासः कुत्रापि भाषायां न दृश्यत इति तथा न कृतम् । तथ्यमिदं Jespersen भद्रेणापि प्रकाशितम्[१८] । अतो नूनमत्र दिवम्पतशब्दस्य समान्तरालः शब्दः क्रमश एकाक्षरप्रधान(monosyllabic)त्वमापन्नायामिङ्गिलशभाषायां jump-

---

१७. यष्ट्यां लः (२।२९)

१८. It is not usual in Germanic languages to form compounds with a verb as the second and an object or a predicate as the first part. Hence when we find such verb as 'to house-

रूपेण प्रचलितः स्यादित्यत्र नास्ति किमप्याश्चर्यम्। अत्र प्रसङ्गे धन्यङ्कथ : thank, मठङ्कर : monk, पवनम्पूर : pump, आर्द्रङ्कर : drink, बन्धङ्कर : bank प्रभृतीनि शब्दयुगलानि परीक्षितव्यानीति नो विचारः।

(च) (i) अनेकशब्दानामाद्यवर्णैराद्याक्षरैर्वा एकशब्दनिर्माणम्—

केचिच्छब्दा अनेकशब्दानामाद्यवर्णैराद्याक्षरैर्वा निर्मीयन्ते। तत्राद्यवर्णैर्निर्माणं यथा—all swa (प्रा. इ.) (all so) > as; world Health Organisation > who; United National Educational Scientific Co-operative Organisation > unesco. news-शब्दं north-east-west-south-शब्दानामाद्याक्षरैर्निष्पादयन्तः केचित् एतन्निष्पत्तिं 'वार्ता' इत्यर्थस्य प्रयोजिकां मन्यन्ते; वार्ताया दिक्चतुष्टयादागतत्वात्। आद्याक्षरैर्निर्माणं यथा— आकामावै < आषाढी-कार्तिकी-माघी वैशाखी[१९]।

केचित् व्याकरणदिशा अन्यथा व्युत्पादितमपि शब्दमनया आद्याक्षरसंयोगपद्धत्या अन्यथा व्युत्पादयन्ति। यथा— आगमशब्दे आङुपसर्गाद् गमधातोर्निष्पन्नेऽपि आगत-गत-मत-शब्दानामाद्याक्षर-संयोगेनास्य शब्दस्य सृष्टिं शंसन्ति। (हरिमुखात्) आगतः, (मुनिमुखे) गतः, (वासुदेवस्य) मतः—इति तस्यार्थं कल्पयन्ति। केचिच्च (शिवमुखात्)

---

keep', the explanation must be that -er has been sub-stracted from the perfectly legitimate noun house-keeper (or -ing from house-keeping.) —Growth and Structure of the English Language. (Sect. 184, P. 165)

१९. द्र. पदाद्यवर्णेनापि पदं लक्ष्यते, यथा— 'आ-का-मा-वै-ष्वनन्तकम्' इत्यत्र आ-का-मा-दिवर्णै-राषाढी-कार्तिकी-माघी-वैशाख्याख्यास्तथे-हापि लि(वर्णे?)वर्णेन लिङ् लक्ष्यते। —संक्षिप्तसारस्थ-गोयिचन्द्रकृत-टीका (Technical terms and Technique of Sanskrit Grammar-ग्रन्थे चतुर्थपृष्ठे उद्धृता)

आगतः, (गिरिजायाः श्रुति) गतः, (सर्वदेवानां) मतः-इत्यर्थं कुर्वन्ति[२०]। निर्गमकल्पनाशीलेन ईदृशव्युत्पादनेऽववहितेन भवितव्यम् ।

(ii) आद्यन्तवर्णाभ्यां शब्दनिर्माणम्—

क्वचिदाद्यन्तवर्णाभ्यां संक्षिप्तशब्दः सृज्यते । यथा—no>numero (लै.)। पाणिनिव्याकरणे अण्, अक् इत्यादयोऽनयैव रीत्या निर्मिताः[२१]। अ-तः ह पर्यन्तं स्थितान् सकलसृष्टितत्त्वसूचकवर्णान् 'अहम्' इति शब्दः अनयैव पद्धत्या प्रकाशयतीति तान्त्रिकाः[२२]।

(iii) शब्दानुकरणेन शब्दनिर्माणम्—

केचित् शब्दाः शब्दानुकरणेन सृष्टाः। यथा—का>काक इति निरुक्तम्[२३]। एवं कु>कोकिल, cuckoo; भें>भेक; भष्>भषक; में> मेष; किणि किणि>किङ्किणी; ढक्>ढक्का, डिम्डिम्>डिण्डिम ।

(iv) समासावयवभूतशब्दस्य लोपः—

क्वचित् समासावयवः पूर्वशब्दः परशब्दो वा लुप्यते। यथा— रघुः<रघुनाथः; मोहनः<राधामोहनः; पुरी<जगन्नाथपुरी[२४] । यथा वा – bus∠omnibus; photo∠photograph; phone∠telephone ।

---

२०. आगतं हरिवक्त्राब्जाद्गतं मुनिमुखे शुभे ।
मतं च वासुदेवस्य तस्मादागम उच्यते ॥
आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ ।
मतं च सर्वदेवानामागमः परिकीर्तितः ॥
—श्रीसुदर्शनयज्ञपद्धतिः (प्रस्तावना, पृ. १५)

२१. द्र. आदिरन्त्येन सहेता —अष्टा. (१।१।७१)

२२. अत एव प्रत्याहारयुक्त्या अनुत्तरानाहताभ्यामेव शिवशक्तिभ्यां गर्भीकृतमेतदात्मकमेव विश्वम्; इति महामन्त्रवीर्यात्मनोऽहंविमर्शस्य तत्त्वम् ।—जगदीशचन्द्रटिप्पणी (२।७ शिवसूत्रस्था)

२३. काक इति शब्दानुकृतिः (नैगम. ४।१)

२४. द्र. विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्यः ।
—सि. कौ. (२०३५ सूत्रस्थवार्तिकम्)

(v) बलाघातात् सन्निहितवर्णलोपः —

क्वचिदेकत्र बलाघातः (stress) सन्निहितं वर्णं दुर्बलीकृत्य तस्य लोपं दिशति । यथा—हिरण्यम्<हितरमणीयम् इति नैरुक्ताः[२५] । एवम् आवलि> आलि, आचार्य>आर्य, भोगमण्डप (ओ.)> भण्ड (ओ.) । evil>ill ।

(छ) (i) शब्दद्वैधीभावः —

यत्र कश्चिन्निर्गतशब्दः सजातीयानेकार्थवाचो, तत्र निःसन्देहार्थबोधाय यादृच्छिकम् ईषदीषद्वर्णभेदं कृत्वा अर्थसंख्यानुसारेण निर्गतशब्दसंख्या वर्ध्यते । यथा—

अवर्त (=न वर्तते किमप्यस्मिन्)>अवतः (वै.)(=कूपः), अवटः (=गर्तः) । सीमान्तः=सीमाप्रान्तः, सीमन्तः=केशवेशः, समाजः=मनुष्यगोष्ठी, समजः =पशुगोष्ठी । स्तम्भः (=स्थूणा)> खम्भो (म. प्रा.), (=स्तम्भनम्)> थम्भो (म. प्रा.)[२६]

कर्तरी>कतुरी(ओ.), कटुरी(ओ.) । अत्राद्यः कर्तर्यर्थकः वस्त्रकेशादिकर्तनसाधन्यां व्यवह्रियते; द्वितीयस्तु काष्ठप्राण्यादिकर्तन्याम् ।

पत् + (ण्) इ(च्)> पाति>पातिबा (ओ.), पतेइबा (ओ.), पकेइबा (ओ.), पाडिबा (ओ.)। पृथक्पृथक्कर्मकारकानुसारेण एषां क्रियाशब्दानां प्रयोगः । यथा—जाल पातिबा; हात पतेइबा; टेका पकेइबा, खोषा पाडिबा ।

इदं स्वेच्छाकृतवर्णपार्थक्यमेव read>rede इति रूपद्वैधे हेतुरिति Bradlay-कृतं विवेचनम्[२७] ।

---

२५. हिरण्यं कस्मात् ? ........हितरमणीयं भवतीति वा ।
—निरुक्तम् (२।१०।२)

२६. द्र. सञ्जीवनी—स्थूणार्थे स्तस्य खः स्तम्भे न त्वन्यस्मिन् कदाचन
—(प्रा. प्र.स्य २।१४ सूत्रस्था)

२७. But in a few cases, the written language has been improved by the establishment of an arbitrary difference in spelling

Catch-chase launch-lance, wage gage, wardon-guardian-इत्यादिशब्दयुगलेषु इयं पृथक्करणप्रवृत्तिर्द्रष्टव्या।

(ii) पृथक्परिस्थितिसृष्टयोस्तद्भवयोः पृथगर्थकत्वम्—

पृथक्परिस्थितौ सृष्टयोः तद्भवयोर्मध्ये कश्चिन्निर्गमकार्थं, कश्चिच्च निर्गमकार्थाद्विकसितेऽर्थे प्रयुज्यते। यथा— क्षार > खार (ग्रो.), छार (ग्रो.)। अत्र काचिद् गोष्ठी क्ष-स्थाने स्वपरिस्थित्यनुसारेण खमुच्चारितवती, अन्या च काचित् छम्। तत्र खार-शब्दः निर्गमकार्थेन समानः। छार इति तु तुच्छार्थकः। क्षारं हि तुच्छवस्त्विति क्षारशब्दस्य विकसितार्थोऽयम्।

(iii) पृथक्परिस्थितिजन्यानां तद्भवानां समानार्थकत्वम्—

क्वचिच्च निर्गमकार्थे विविधपरिस्थितिजन्यौ तद्भवौ व्यवह्रियेते। यथा—स्थित > छिड़ा (ग्रो.), ठिश्रा (ग्रो.); मृत > मडा (ग्रो.), मला (ग्रो), मग्र (ग्रो.), म(ग्रो.); यष्टि > लाठि (ग्रो.), जाठि(ग्रो.) (यष्टिमधु > जाठिमहु (ग्रो.) इत्यत्र)।

(ज) तत्समतद्भवशब्दयोः पृथगर्थकत्वम्—

यत्र निर्गमकभाषाया अनेकार्थकः शब्दः औत्तरकालिकभाषायां तत्समरूपं तद्भवरूपं च धारयति, तत्र एकस्मिन्नर्थे तत्समरूपम, अन्यस्मिन्नर्थे च तद्भवरूपं प्रयुज्यते। यथा— नेत्रम् > नेत (ग्रो.) = वस्त्रम्। नेत्र (ग्रो.) इति तत्समशब्दस्तु चक्षुरर्थे।

(झ) पृथक्छब्दनिर्गतानामेकरूपत्वम्—

पृथक् पृथक् शब्देभ्यो निर्गतशब्दाः क्वचित् एकं रूपं धारयन्ति। यथा— यूथी, ज्योतिः > जुइ (ग्रो.); प्रपानक, प्रेतान्न > पणा (ग्रो.);

---

between what were originally the senses of the same word. We have seen already that 'read' and 'rede' represent the divergent uses of one and same old English verb. An old-fashioned spelling has been retained to denote the old-fashioned sense, while the ordinary sense is expressed by a spelling in accordance with modern analogies. —The Making of English (Chap. 5, P. 141-142)

मा-अन (ल्युट्), मन्-(घ्) अ (ञ्)7मान (मानदण्ड-समान-गतो मानशब्दो परस्पराद्भिन्नो)। [पत्+(ण) इ (च्)>] पाति, पर्द 7 पाडिबा (ओ.); uttera (प्रा. इ.) (अत्यन्तार्थकः), outer >utter।

(ञ) इष्टिः प्राप्तिश्च—

कस्मिंश्चिच्छब्दे योऽशः उपसर्ग-प्रकृति-प्रत्ययरूपेण सार्थकः, स एवांशोऽन्यत्र तथा न भवतीति निरर्थकः। ईदृशस्थलेषु केचित् प्रचलितार्थमबुद्ध्वा व्याकरणात् प्राप्तमर्थान्तरं योजयन्ति। यथा—सूत∠षू(क्)त। कश्चिद्वैयाकरणः अत्र सूत∠सु+उत (∠वे (ञ्)+(क्) त) इति मेने, कदाचित् कस्मिंश्चित् सूते क्रुद्धः सन् स 'सु'-स्थाने 'दुर्' इति प्रयुज्य तं 'दुरुत' इत्याक्षिपत्। अयं वृत्तान्तः पतञ्जलिना वर्णितः, तेन च लोकप्रचलितोऽर्थः 'इष्टिः' इति, केवलव्याकरणप्राप्तो लोकप्रचलितश्चार्थः 'प्राप्तिः' इति आख्यातः[२८]।

(ट) शब्दानामनुनिर्माणम्—

(i) केचित् निरर्थकांशद्वयं सार्थकं मन्यमानाः कदाचिदेकमंशं व्यवहरन्ति। यथा— असून्= प्राणान् राति= ददाति इति, वसूनि अस्यास्तीति वा[२९] वैदिकस्य असुरशब्दस्य विग्रहः। कालक्रमेणार्थपरिवर्तने जाते अस्यन्ति= क्षिपन्ति (देवान्) इति विग्रहः कृतः[३०]। त्रिष्वप्येषु विग्रहेषु अ, सुर इत्यंशौ अनर्थकौ। किन्तु परस्मिन् काले अज्ञात, अदृष्ट,

२८. एवं हि कश्चिद्वैयाकरण आह— 'कोऽस्य रथस्य प्रवेते'ति। सूत आह—'आयुष्मन्नहं प्राजिते'ति। वैयाकरण आह—'अपशब्द' इति। सूत आह—'प्राप्तिज्ञो देवानां प्रियो न त्विष्टिज्ञः। इष्यत एतद्रूप'मिति। वैयाकरण आह—'अहो नु खल्वनेन दुरुतेन बाध्यामहे' इति। सूत आह – 'न खलु वेञः सूतः, सुवतेरेव सूतः। यदि सुवतेः कुत्सा प्रयोक्तव्या, दुःसूतेनेति वक्तव्यम्'। —म.भा. (२।४।५६ सूत्रस्थम्)

२९. पा. टी. २।६४।

३०. द्र. रामाश्रमी (१।१।१२स्था)।

अक्षय इत्यादिशब्देष्विव असुरशब्देऽपि अ, सुर, इत्यंशद्वयं कल्पितम् । अ इति विरोधसूचकस्य नञो रूप , सुखेन राजते इति सुरः इति विग्रहात् सुरशब्दो देवार्थक इति च विचारः कृतः। तेन देवविरोधीति सामूहिकार्थो जातः[३१] । इत्थं सुरशब्दोऽनुनिर्मितः।

(ii) केचिच्च प्रकृतिप्रत्ययविभाजने भ्रमं कुर्वन्ति। स च भ्रमः कदाचिदनुमोदितः सन् पश्चात् प्रत्ययांशयुक्तप्रकृतेः शुद्धप्रकृतिरूपेण ग्रहणे निमित्तं भवति । Jespersen-कथनमत्र[३२] प्रणिधानयोग्यम्। तदुक्तेरभिप्रायस्तु—

( He walks ) sidling, (he lies) groveling, darkling इत्यत्र वस्तुतः side, grovel, dark इति प्रकृतयः, ling इति च क्रियाविशेषण-सूचकः प्रत्ययः। परन्तु 'l' इति प्रत्ययांशं प्रकृत्यंशरूपेण कल्पयित्वा sidle, grovel, darkle इति प्रकृतीः, going इत्यादिष्विव ing इति वर्तमान-कालिककृदन्तविशेषणप्रत्ययं (present participle) केचिन्मेनिरे, तथा च व्यवजह्रिरे। तादृशव्यवहारश्च शिष्टैरनुमोदितः सन् sidle इत्यादिनूतन-

३१. द्र. Sanskrit-English Dictionary.

३२. The adverbs sidling, groveling, darkling were originally formed by means of tne adverbial ending -ling, but in such phrases as he walks sidling, he lies groveling etc, they looked exactly like participles in -ing, and the consequence was that new verbs to sidle, to grovel, to darkle were derived from them by the substraction of -ing and the Latin words editor, donator, vivisector produce the un-Latin verbs to edit, donate ( American ), vivisect (Meredith) etc; which look as if they came from the Latin participles. —Growth and Structure of the English Language (Sect. 193, Chap. 8, P. 164-165)

धातून् ससर्ज। इत्थम् editor, donator, vivisector इति लैतिन्शब्देषु प्रकृतिप्रत्ययनिरूपणे भ्रमं विधाय edit, donate, vivisect इति धातून् कल्पयन्ति, ये लैतिनभाषायां न सन्ति। ईदृशशब्दनिर्माणं Dr. Murray अनुनिर्माणम् (back-formation) इत्याख्याति[३३]।

(ठ) यदृच्छाशब्दनिर्माणम्—

क्वचिदर्थमनपेक्ष्य यदृच्छया वर्णान् संयोज्य पदार्थानां नाम क्रियते। यथा डित्थः (=काष्ठमयो हस्ती), डवित्थः (=चर्ममयो मृगः)। अनयोः शब्दयोर्व्युत्पत्तिर्नास्ति। Jespersen kodak-शब्दमेतज्जातीयं ब्रूते[३४]।

(ड) व्यस्तैः समस्तैर्वा प्रकृतिप्रत्ययैः शब्दनिर्माणम्—

(i) कुत्रचित् केवल उपसर्गः, केवलो धातुः केवलः प्रत्ययो वा शब्दं निष्पादयति। यथाक्रमं यथा— अति (सर्वत्र गर्हितम्); (स्थाणुं वन्दे भव-)च्छिदे[३५]। तारतम्यम् (∠तर (प्)+तम (प्)+(ष्)य (ञ्))।

(ii) कुत्रचित् धातुप्रत्ययाभ्यां शब्दो निष्पद्यते। यथा—(मी (ञ्)+(श्)ना>) मीना : min, श्रु+(श्)नु>शृणु>सुण् (प्रा.)।

(iii) कुत्रचित्सुबन्तशब्दात् शब्दो निष्पद्यते। यथा—त्रीणि7 तीन (हि.)।

---

३३. Sueh back formation, as they are very commonly formed by Dr. Murray owe their origin to one part of a word being mistaken for some derivative suffixes (or more rarely prefix). —तत्रैव (Sect. 183, Chap. 8, P. 164)

३४. Sometimes a mere arbitrary collection of sounds or letters is chosen as in the case of kodak —तत्रैव (Sect. 162, Chap. 7, P. 147)

३५. छिद इत्यत्र वैयाकरणैः क्विप्प्रत्ययलोपे कथितेऽपि भाषाविज्ञानमते केवलो धातुरयम्।

(iv) कुत्रचिदुपसर्गधातुभ्यां शब्दो निष्पद्यते । यथा— निर्+वह्>निभाना(हि.), उत्+स्था>उठ (हि.,ओ.), वि+क्री>बिक (ओ.)।

(ढ) सजातीयानेकनिर्गमकशब्देभ्य एकस्य चयने काठिन्यम्—

यत्र निर्गमकभाषायाम् एकार्थवाचका बहवः सजातीयशब्दा उपलभ्यन्ते, तत्र उद्दिष्टो निर्गतशब्दो वस्तुतः कतमस्मान्निर्गमकशब्दान्निर्गत इति निरूपणं कठिनं भवति । यथा— वाशी[३६], वाचा, वाच्, भाषा इति शब्दचतुष्टयं संस्कृते समानार्थकम् । श-ष-स-चा-नां मध्ये ब-भ-योश्च मध्ये विनिमयस्य वर्णतत्त्वदिशा सुप्रतिपादत्वात् एतच्चतुष्टयस्य vocem (लै.), vox, voiz (प्रा.फ्रे.), voix (फ्रे.), voice इति शब्दैरपि समान्तरालं सामञ्जस्यं सुप्रकाशं भवति । ईदृशस्थलेषु एभ्यो येन केनापि निर्गमकशब्देन निर्गतशब्दस्य सम्पर्कः कल्पनीयः । प्राचीनतमशब्दान्वेषणे आग्रहः परित्याज्यः । भाषाया उद्गमस्य गतिमार्गस्य च अन्धकाराच्छन्नत्वात्, अयं प्राचीनः, अयं प्राचीनतरः, अयं प्राचीनतमः-इति कल्पनाया अनेकत्र अवास्तवत्वसम्भावनात् । यतो निगमस्य ह्रासविकासात्मिका अनुलोमप्रतिलोमात्मिका गतिर्वा अनेकरूपा भवतीति शब्दपरिवर्तनं चाद्यन्तकल्पनातिक्रामीति निर्गमप्रणाली धाराबद्धा कर्तुं न शक्यते ।

(ण) पर्यायेभ्यो निर्गमकचयनं क्वचिद्दुष्करम्—

पर्यायवाचकानेकशब्देभ्य एकस्य निर्गमकरूपेण चयनं क्वचित्कठिनं भवति । यथा—फुल्ल>फूल । नात्र पुष्पादिशब्दा निर्गमकाः । listen : नि+शम्, न तु श्रु-कर्णादिधातवः; hound : श्वन्, न तु कुक्कुरादिशब्दाः ।

(त) विशेष्यविशेषणक्रियारूपेभ्यस्तदन्यतमरूपसृष्टिः —

क्वचिद्विशेष्यविशेषणक्रियारूपेभ्यस्तदन्यतमरूपाणि सृज्यन्ते । यथा— स्व>स्वति (स्व इवाचरति), कृष्ण>कृष्णति, कृष्णायते (कृष्ण इवाचरति), कृष्णयति (कृष्णं करोति), कृष्णायति (कृष्णमात्मन इच्छति)।

---

३६. द्र. निरुक्तम् (१।२३।१)

भू (धातु)>भूः (विशेष्यम्), प्रविष्ट>पैठना (हि.), निर्माण—निर्माणिबा (ग्रो.), require>requisition (विशेष्य)>requisition (क्रिया)। भूतकालबोधककृदन्तविशेषणम् (passive participle) इङ्गिलशभाषायां धातुरूपेण व्यवह्रियत इति तज्ज्ञाः[१७]।

(थ) अर्थपरिवर्तनम्—

वर्णवदर्थस्यापि विनिमयवृद्धिक्षया भवन्ति। भाषाशास्त्रे इमानि (१) अर्थपरिवर्तनम्, (२) अर्थविस्तारः, (३) अर्थसङ्कोचश्चेति कथ्यन्ते। यथा—

(१) अर्थपरिवर्तनम् (विनिमयः)—

असुरः= देवः>देवारिः; उपेक्षा= समीपदर्शनम्> परित्यागः; अनुग्रहः =(भारवाहिनः साहाय्यार्थं केनचित्) पश्चात् (भारस्यांशिकभावेन) धारणम्>दया; प्रवीणः = प्रकृष्टवीणावादकः7 निपुणः; निष्णातः= नितरां स्नातः7 सकलतात्पर्यज्ञः; noon (: nine)=नव (>सूर्योदयतो नवघटिका, या चर्च्सेवासमय आसीत्)7मध्याह्नः (साम्प्रतिकचर्च्सेवासमयः)।

(२) अर्थविस्तारः —

पयोधरः=दुग्धधरः स्तनः7स्तनः; पत्त्रम्=वृक्षस्य अंशविशेषः 7कागदम्। आदौ भूर्जताल्यादिपत्त्रेषु लेखनकार्यमकारि। अधुना तु तत् कागदे विधीयते। कागदस्य वस्तुतः पत्त्रत्वाभावेऽपि अर्थविस्तारमहिम्ना तथा व्यवहारः। uvunculus (ले.)=मातुलः 7oncle (प्रा. फ्रे.) 7uncle = मातुलः पितृव्यश्च>[१८]।

---

१७. In many instances, we fall back on the old practice of forming the English verb from the passive participle. —The Makiug of English (Chap. III, P. 97).

१८. A diminutive of avus was avunculus applied first to a mother's brother. This through prov. avoncle aoncle became o. Fr. oncle and Eng. uncle now applied to a mother's or a father's brother. —Dictionary of Word Origins.

(३) अर्थसङ्कोचः —

क्वचित् (i) सङ्कुचितार्थे (ii) सङ्कुचितासङ्कुचितोभयार्थे वा शब्दस्य प्रयोगो भवति ।

(i) सङ्कुचितार्थे यथा— पङ्कजम् = पङ्कजातम् > पद्मम्; drunk-ard = पानकारी > मद्यपः ; मृगः = पशुः > हरिणाख्यः पशुविशेषः । गौः = गमनशीलः > पशुविशेषः । यौगिकं गमनशीलरूपसामान्यार्थं विहाय गमनशीलविशेषार्थकत्वात् प्राचीनशास्त्रीयविचारेण पङ्कजादिवत् योगरूढोऽयं शब्दः । एवं विविधशब्देषु भाषाविज्ञानोक्तोऽर्थसङ्कोचो भवति । साहित्यदर्पणे गोशब्दस्य गमनशीलत्वार्थो व्युत्पत्तिनिमित्तम्, धेन्वर्थश्च प्रवृत्तिनिमित्तमित्युक्तम्[३९] । यत्र व्युत्पत्तिलभ्यस्यार्थस्य परिवर्तनं भवति, तत्रैव प्रवृत्तिनिमित्तार्थः पृथक्तया ग्रहणीय इति निष्कर्षः । इदं च अत्रोक्तस्य अर्थपरिवर्तनस्य परिसरमायाति ।

(ii) उभयार्थे यथा— पानम्; drink । एतौ पानसामान्यरूपे असङ्कुचिते यौगिकार्थे पानविशेषरूपे सङ्कुचिते योगरूढे सुरापानार्थे च व्यवह्रियेते ।

क्वचित् बहवः सङ्कुचितार्था भवन्ति । यथा— गौः, दंशः, छिन्ना ।

अत्र गोशब्दो गमनकारिरूपसामान्यार्थे न व्यवह्रियते, परन्तु गमनशीलेति सामान्यार्थं भित्तीकृत्य धेनु-किरण-वज्र-लोम-दृष्टि-वागादिषु बहुष्वर्थेषु योगरूढः ।

दंश - शब्दो दंशनरूपसामान्यार्थे व्यवह्रियते, वनमक्षिकेति योगरूढार्थे च । तस्यैव शब्दस्य समान्तरालत्वेन dog-शब्दो ग्रहीतुं शक्यते यो दंशनकारिविशेषरूपे कुक्कुरार्थे प्रयुज्यते । अत्र संस्कृतयोगरूढार्थोऽन्यः, इङ्गिलश्योगरूढार्थश्चान्यः ।

---

३९. अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे 'गौः शेते' इत्यत्रापि लक्षणा स्यात् । गमेर्डोः ( उणादि २।६७ ) इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकाले प्रयोगात् ।

—साहित्यदर्पणः (प. २, लक्षणाप्रकरणम्)

छिन्ना शाटी, छिन्ना पेटिका इत्यादौ छिन्नाशब्दश्छेदनयुक्तरूपेऽर्थसामान्ये व्यवह्रियते। छेना (ओ.) शब्द एतस्मादेव निर्गत इत्यस्माकमनुमानम्। अयं छेना-शब्दो दुग्धच्छेदनोद्भवाया आमिक्षाया अर्थे व्यवह्रियते। अपि च सम्बलपुरीय-ओड़िआभाषायामयमेव शब्दः छिन्नगोमयोद्भवशुष्ककरीषखण्डार्थे प्रयुज्यते। उभयत्रापि पृथक् पृथग् योगरूढोऽयं शब्दश्छेदनार्थं भित्तीकृत्य प्रवृत्तः।

निर्वचनप्रणाली—

निर्वचनप्रणाल्या निरूपणविषये यास्ककृतनिरुक्ते विचारः कृतः। तत्रोक्तं यत्— यदि कस्यापि शब्दस्य व्युत्पत्तिः कर्तुं न शक्यते, कृतायामपि वा व्युत्पत्तौ सा प्रकृतार्थेन सम्पृक्ता न भवति, तर्हि व्याकरण-व्युत्पत्तिमनपेक्ष्य किमपि सामञ्जस्यं निष्कास्य अर्थेन सम्बन्धः स्थापनीयः। सत्यामावश्यकतायां तच्छब्दगतानि स्वरव्यञ्जनानि यस्मिन् शब्दे वर्तन्ते, तस्यार्थेन सह सम्बन्धो योजयितव्यः, न तु कश्चिच्छब्दः अर्थमकृत्वा उपेक्षितव्यः[४०]।

एतदनुशासनानुगुणं सत्य-शब्दस्य यकारो णिजन्तस्य इण् धातोः 'आयि' इति रूपगतेन यकारेण सम्बद्धः सन् 'आयि'गतमर्थं गृह्णातीति तत्रत्यं कथनम्[४१]। लुप्तवेदार्थस्योद्धारायायं नैरुक्तानां मार्गः। तत्र पुनस्तस्यैव शब्दस्य एकस्मिन् स्थाने एकविधः, अन्यस्थाने चान्यविधोऽर्थः कृत इति प्रकृतार्थनिरूपणं कठिनं भवति। यथा— नासत्यौ (वै.)= नासाजातौ, न असत्यौ (=यज्ञफलस्य नियतभावेन दातारौ); होता=(आ) ह्वाता (देवानाम्), हवनसाधनः।

---

४०. अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत। केनचिद्वृत्तिसामान्येन। अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयात्। न त्वेव न निर्ब्रूयात् —निरुक्तम् (२।१।३-४)

४१. एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च। —तत्रैव (१।४।२)

किं च येन केनापि प्रकारेण व्युत्पादनं केचिद्वैयाकरणा नैरुक्ताश्च नोचितं मन्यन्ते। तेन येषां शब्दानां व्युत्पत्तिः स्वाभाविकरीत्या कर्तुं न शक्यते, तद्व्युत्पत्त्यर्थं क्लिष्टकल्पनामकृत्वा ते अव्युत्पन्नप्रातिपदिकभावेन ग्राह्या इति तेषामुपदेशः। इदं स्वयं यास्केनापि ज्ञातमासीत्[४२]।

यास्कस्य निर्वचनपद्धतौ गृहीतायां बहुत्र अविवक्षिता अर्था आपद्येरन्। तस्मादर्थस्य प्रतीतिः स्वाभाविकतयैव सम्पादयितव्या, न तु येन केनाप्युपायेन। युक्तिं शास्त्रोक्तिं च धुरो निधाय अत्र सत्यानुसन्धित्सुभावेन प्रवर्तितव्यम्, न पुनरर्थनिष्कासने ग्रहो विधातव्यः।

एतत्परिच्छेदे बहुधा निर्मितानां शब्दानां बहुधा निष्कास्यमानानामर्थानां वर्णनस्य हेतुस्तावत्—प्रस्तूयमाने सन्दर्भे केवलं स्वाभाविकरीत्या कृतपदानां परिवर्तनानां विषये चर्चा विधीयते; साऽपि स्थान-करण-बाह्याभ्यन्तरप्रयत्नसामञ्जस्यमाधारीकृत्य, न त्वत्र चर्चितानि मार्गान्तराणि। बहुप्रचलिता अपि ये शब्दा एतत्सामञ्जस्यानयनपद्धतौ न पतन्ति, ते परित्यज्यन्ते। मार्गान्तराश्रयेण लब्धानां शब्दार्थानाम् एतन्मार्गमाश्रित्य प्रतिपादनप्रयासोऽनुचित एवेति प्रकाशनमेतत्परिच्छेदस्योद्देश्यम्।



४२. तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके। —तत्रैव (१।४।१)

# पञ्चमः परिच्छेदः

## वर्णसंज्ञा

### ५१. पाश्चात्यवर्णमालासु क्रमाभावः

अत्र प्रसङ्गात् वर्णशब्दो बाहुल्येन वर्णव्यञ्जकलिप्यर्थको बोध्यः। विविधोदाहरणपरीक्षया वर्णपरिवर्तनपद्धतौ कल्पितायां कस्को वर्णः केन केन रूपेण परिवर्तनं भजत इति सामूहिकरूपेण विचार आवश्यको भवति। तदर्थं भारोपीयभाषाभ्यः कस्या अपि वर्णा ग्रहीतव्याः, तेषां परिवर्तन-प्रकाशनोपयोगी कश्चित् क्रमश्चान्वेषणीयः। प्रतिभाषमेकैका वर्णमाला विद्यते, यस्यास्तत्तद्भाषागतो वर्णसमूहो ज्ञायेत। तस्माद्वर्णमालासूचिका कस्या भाषाया लिपिमाला विज्ञानसम्मतं वर्णसन्निवेशक्रमं धत्ते, यः खलु परिवर्तनप्रकाशनार्थमवलम्बनीयः—इत्यन्वेषणावसरे सर्वदेशगृहीताया इङ्गिलश्भाषाया लिपिमाला यावत् प्रथमतो विचारपथमापतति, तावत्तस्या अपूर्णतां देवनागरीलिपिमालातुलनया च अवैज्ञानिकतां प्रकाशयन्ती Macdonell युक्तिः प्रस्तुतोद्देश्यसाधने इङ्गिलश्लिपिमालाया अक्षमतां प्रकाशयति। इदं हि तेनोक्तं यत्—

न केवलं देवनागरीलिपिमाला संस्कृतभाषाव्यवहृतानां सर्वेषामेव वर्णानां प्रातिनिध्यं करोति, अपि च पूर्णया वैज्ञानिकपद्धत्या तान् यथोचित-क्रमेण सज्जयति। प्रथमतो ह्रस्वा दीर्घाश्च समानस्वराः, ततः सन्ध्यक्षराणि, अन्ते च उच्चारणस्थानानामानुपूर्वीमनतिक्रम्य तत्तद्वर्ग्यव्यञ्जनश्रेणी। यथा—दन्त्याः त-थ-द-ध-नाः, ओष्ठ्याः प-फ-ब-भ-माः।

एतद्वैपरीत्येन वयं यूरोपीयाः सार्धद्विसहस्राब्द्याः परं वैज्ञानिके युगेऽद्यापि ईदृशीं लिपिमालामाश्रयामो याऽस्मद्भाषावर्णमालायाः

केषाञ्चिद्वर्णानां प्रातिनिध्येऽक्षमा, यादृच्छिकरीत्या च सन्निवेशिता—यत्र स्वरा व्यञ्जनानि च इतस्ततो मिश्रितानि। त्रिसहस्राब्द्याः पूर्वं ग्रीक्भाषायां या आदिमा सामि (semitic) - सञ्ज्ञा अग्राहि, सा तथैव अक्षुण्णा वर्तते' इति।

अनयोक्त्या न केवलम् इङ्ग्लिश्वर्णमाला, अपि च ग्रीक् आदिका सकलाऽपि पाश्चात्यवर्णमाला वैज्ञानिकक्रमहीनेति ज्ञायते। तेनात्र तासां नोपयोगः। तस्मादत्र प्राच्यासु मुख्या संस्कृतवर्णमाला गृह्यते।

## ५२. वैज्ञानिको वर्णक्रमः

कश्चिद्वर्णक्रमो विज्ञानसम्मतो न वेति निर्णयो वैज्ञानिकवर्णक्रमस्य स्वरूपज्ञानमपेक्षते। वर्णतत्त्वपर्यालोचनया प्रथममेकजातीयां वर्णश्रेणीं विन्यस्य तत्पश्चादीषत्पार्थक्यभाजां सर्वासां वर्णश्रेणीनाम्, प्रतिवर्णश्रेणि च ईषदीषत्पार्थक्यभाजां सर्वेषां वर्णानामुत्तरोत्तरं विन्यसो वैज्ञानिको वर्णक्रमो भवितुमर्हति। तस्मादेतदर्थं वक्ष्यमाणा योजना विधातव्या—

(१) उच्चारणस्थानेषु करणास्पर्शेन वायुमार्गस्योन्मोचनाद्वायु-प्रवाहः सबलीभूय यां स्वराख्यामस्पृष्टप्रयत्नजन्यां वर्णश्रेणीमुच्चारयति, तां

---

१. It not only represents all the sounds of the Sanskrit language, but arranges on a thoroughly scientific method; the simple vowels (short and long) coming first, then the diphthongs and lastly the consonants in uniform groups according to the organs of speech with which they are pronounced. Thus the dental consonants appear together as त-थ-द-घ-न and labials as प फ-ब-भ-म l

We Europeans on tne other hand 2500 years later and in a scientific age still comploy an alphabet which is not only inadequate to represent all the sounds of our language, but also prescribe the random order in which vowels and consona-nts are jumbled up as they were in adoptation of the primitive scientific arrangement of 3000 years ago. —A History of Sanskrit Literature (Chap. 1, P. 14)

प्रथमतो विन्यस्य पश्चात् करणेन विविधमात्रया स्पर्शात् क्रमदुर्बलेन वायुप्रवाहेण यथाक्रममुच्चार्यमाणानाम् ईषत्स्पृष्ट-ध्वस्पृष्ट-स्पृष्टप्रयत्नभाजाम् अन्तस्थो-ष्म-स्पर्शाख्यानां वर्णश्रेणीनाम् अनेनैव क्रमेण विन्यासः कर्तव्यः। क्रमोऽयं पाणिनीयशिक्षायां सूचितः[२]।

(२) (क) मुखे प्रथमं जिह्वायास्ततश्चोष्ठस्यावस्थितेः प्रतिवर्णश्रेणि प्रथमतो जिह्वाकरणकास्ततश्च ओष्ठकरणका विन्यस्तव्याः। यथा— अ-इ-उ इत्यत्र अ इ इति जिह्वाकरणकवर्णद्वयानन्तरम् उ इति ओष्ठकरणकवर्णोऽवस्थाप्यः। अन्ते यथासम्भवं द्विकरणका वर्णा विन्यस्तव्याः। यथा— ए-ऐ-ओ-औ। अत्र प्रथमयो जिंह्वामूलं जिह्वामध्यं च करणम्, अन्त्ययोश्च जिह्वामूलजिह्वाग्रे।

(ख) उच्चारणस्थानक्रमेण वर्णानां विन्यासः कर्तव्यः। तथा विन्यस्ता वर्णाः करणविन्यासक्रमेण स्वतो जिह्वाया मूलमध्याग्रोपाग्रैर्यथाक्रममुच्चारिता भवेयुः। यथा— अ-इ इति कण्ठ्यानन्तरं तालव्ये स्थापिते स्वतो जिह्वाया मूलं मध्यं च करणे भवतः।

(ग) उच्चारणस्थानानि मुख्यगौणभावेन विभज्य तत्क्रमेण स्वराः सन्निवेशयितव्याः। यथा— मुख्यस्थानात् कण्ठ-तात्वो-ष्ठात् उच्चार्यमाणान् अ-इ-उ-वर्णान् प्राग्विन्यस्य ततो मूर्ध-दन्तेति गौणस्थानाभ्यामुत्पद्यमानौ ऋ-ऌ वर्णौ विन्यस्तव्यौ।

अयं विभागो नूनं वर्णमालाविद्भिर्ज्ञात आसीत्। तेन उच्चारणस्थानक्रमेण अ-इ-ऋ-ऌ-उ इति ह-य-र-ल-व इति च क्रमेण वर्णविन्यासस्यौचित्येऽपि माहेश्वरवर्णमालायां तथा न कृत्वा अ-इ-उ(ण्), ऋऌ(क्) इति क्रमेण हयवर (ट्), ल(ण्) इति क्रमेण च वर्णाः सन्निवेशिता यत्र अनुपदोक्तो मुख्यगौणक्रमः समुल्लसति। तान्त्रिके वर्णक्रमे च अ-आ-इ-ई-उ-ऊ-ऋ-ॠ-ऌ-ॡ- इति क्रमेण स्वरसन्निवेशः अमुमेवार्थं पुष्णाति।

मुख्यगौणविभाजनप्रकारश्च वक्ष्यमाणरीत्या कल्पयितुं शक्यः। यथा—सन्ध्यक्षरषटकवर्णानामुच्चारणस्थानानि मुख्यानि, तदन्यानि च

२. पा. टी. २।१०६

गौणानि । तदुच्चारणस्थानोत्पन्नाः स्वराश्च मुख्य-गौण व्यपदेशमर्हन्ति । यद्वा तान्त्रिकविचारदिशा बीजान्तरप्रसवसमर्थाः स्वरा मुख्याः, तदितरे च गौणाः । अ-इ-उ- इत्येते हि ए-ऐ-ओ-औ इति बीजानि प्रसुवते; ऋ-ऌ इत्येतौ न कमपि वर्णं प्रसुवाते इति तौ नपुंसकवर्णाविभिहितौ[३] ।

## ५३. माहेश्वरवर्णमालाक्रमे वैज्ञानिकताया गौणत्वम्

एतत्सिद्धान्ताधारेण भारतीयवर्णमालापरीक्षा कर्तव्या । अद्यत्वे भारते येन रूपेण वर्णशिक्षा प्रदीयते, तत्र वर्णमालायाः प्राचीनक्रमो नास्ति, लघूपायेन लिपिग्रहणस्य मुख्यलक्ष्यत्वात् । लिपिलेखनदृष्ट्या सरलवक्र-वर्तुलरेखाणामभ्यासः शीघ्रमेव यथा स्यात्तथैव बालका लिपीर्ग्राह्यन्ते । प्राचीनक्रमा अपि बहवः । पृथक् पृथक् लक्ष्याभिमुखत्वेन तेषां प्रवृत्तिः । उदाहरणार्थं तिस्रो वर्णमाला अत्र गृह्यन्ते ।

शारदातिलके भूतलिपिनाम्नाऽऽख्याता तत्र एकेन क्रमेण सज्जिता द्विचत्वारिंशद्वर्णघटिता वर्णमाला[४] चतुर्दशसु माहेश्वरसूत्रेषु अन्येन क्रमेण सज्जिताऽस्ति । यथा—

अइउ(ण्), ऋऌ(क्), एओ(ङ्),ऐऔ(च्), हयवर(ट्), ल्(अण्), ञमङणन (म्), झभ (ञ्), घढध (ष्), जबगडद (श्), खफछठथचटत(व्), कप (य्), शषस (र्), ह (ल्) ।

अत्र बन्धनीमध्यगता वर्णा वर्णमालाघटका न भवन्ति । व्याकरण-गत प्रयोजनमेषामुपादाने[५] हेतुः । हकारादिष्वकारा वस्तुतो न सन्ति । केवलमुच्चारणार्थं तेषां विनिवेशः।

---

३. द्र. शिवसूत्रविमर्शिनी (२।७ सूत्रस्था)

४. पञ्चह्रस्वाः(अइउऋऌ) सन्धिवर्णा (ए-ओ-ऐ-औ) व्योमेराग्निजलं धरा
 इत्यमाद्यं द्वितीयञ्च चतुर्थं मध्यमं क्रमात् ।
 पञ्च वर्गाक्षराणि स्युर्वान्तस्वितेन्दु (य-र-ल-व, श-ष-स, ह)भिः सह
 एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः । —शारदातिलकम् (७।१-३)

५. (क) णादयोऽणाद्यर्थाः —लघुसिद्धान्तकौमुदी (तृतीयसूत्रस्था)
 (ख) प्रत्याहारेष्वितां न ग्रहणम् —सि. कौ. (तृतीयसूत्रस्था)

प्रत्याहारसिद्धिरस्य वर्णक्रमस्य लक्ष्यम् । प्रत्याहारो नाम बह्वर्थलाभार्था अल्पोक्तिः। प्रस्तुते च अल्पवर्णोक्त्या बहुवर्णप्रत्यायनम् । तथा हि माहेश्वरसूत्रगतं कमपि वर्णमादिवर्णत्वेन, परवर्तिनं बन्धनीगतं कमपि वर्णं चान्त्यवर्णत्वेन संस्थाप्य एका संज्ञा विधीयते, यया तयोर्मध्यगताः सर्वेऽपि वर्णा आदिवर्णश्च सूचिताः स्युः । यथा— अइउण्सूत्रगतः अः ऐऔच्सूत्रगतः च् च मिलित्वा 'अच्' इति प्रत्याहारं सम्पादयतो येन अ-इ-उ-ऋ-लृ-ए-ओ-ऐ-औ- इति वर्णानां बोधो भवति । एवं यण्-पदेन य-व-र-लाः, इक् पदेन च इ-उ-ऋ-लृ- इति बोध्यन्ते । ईदृशं संक्षेपणं पुरस्कृत्य सूत्रकारः पाणिनिः 'इको यणचि' इत्यक्षरपञ्चकमात्रमुक्त्वा 'अ-इ-उ-ऋ-लृ-ए-ओ-ऐ-औ-भ्यः कस्मिंश्चिद्वर्णे परत्र स्थिते पूर्ववर्तिनः इ-उ-ऋ-लृ इत्येते यथाक्रमं य-व-र-ला भवन्ति' इति बह्वर्थान् प्रकटितवान्। अल्पाक्षरैर्बहुकथनस्येदं कौशलमाश्रित्य संश्लेषणयुगजन्मा पाणिनिः महद् व्याकरणशास्त्रम् अल्पैरेवाक्षरैः प्रस्तोतुं शशाक । न खलु यादृच्छिकभावेन वर्णानां संक्षेपणम्, किन्तु शब्दनिर्माणे परिवर्तनमापादयन्तीनां तत्तद्वर्ण-श्रेणीनां प्रत्याहारैर्बोध एव तस्य लक्ष्यमासीदिति परिशीलनाज् ज्ञायते । यथा—अच् इत्यनेन स्वरश्रेणी, यण् इत्यनेन अन्तस्थश्रेणी, अक् इत्यनेन समानस्वरश्रेणी इत्यादि । एतद्वर्णसञ्ज्ञाविषये परिशीलनाज् ज्ञायते यत्, श्रेणीबद्धभावेन वर्णसञ्ज्ञा वैज्ञानिक्येव, परन्तु लघूपायेन शब्दसाधनफलिकायाः प्रत्याहारसिद्धेर्मुख्यत्वेन यत्र वैज्ञानिकसञ्ज्ञाप्रत्याहारसिद्ध्योर्विरोधो भवति, तत्र वैज्ञानिकसञ्ज्ञा उपेक्षिता । अन्यथा तु उभयोरपि निर्वाहः कृतः । W. S. Allen अपि इदमेव मन्यते । माहेश्वरवर्णमालाक्रमं पाणिनिकृतं मन्यमानः स वदति यत्[७], अस्मिन् वर्णक्रमे यः कश्चिद्व्यतिक्रमो दृश्यते, स व्याकरणीयोद्देश्यसिद्धिमूलकः ।

७. The arrangement of Panini's list of sounds, which at first looks rather disorderly, is explainable as due to the phonetic catelogue of sounds having been adopted to the practical requirements of Grammar in which Panini wanted to refer to certain groups of sounds by short expression—Phonetics in Ancient India (foot note, P. 20)

परीक्षया ज्ञायते यत् कचिदुद्देश्यान्तरमपि व्यतिक्रमे हेतुरिति। यथा—

(क) मुखविवरे कण्ठतालुमूर्धदन्तोष्ठं क्रमेणावस्थितम्। तत्क्रमेण पाठे अ-इ-ऋ-ऌ उ इति ह-य-र-ल-व इति च स्यात्। परन्तु अइउ (ण्), ऋऌ (क्), हयवर (ट्), ल (अण्) इति माहेश्वरसूत्रचतुष्टये स क्रमो लङ्घितः। उच्चारणस्थानानां मुख्य-गौणदिशा क्रमिकता एवंविधविन्यासे बीजमिति प्राक् प्रतिपादितम्।

(ख) अ-इ-उ (ण्), ऋ-ऌ (क्) इत्यत्र ह-य-व-र (ट्), ल (अण्) इत्यत्र च यो विन्यासक्रमोऽस्ति, स ञमङणन (म्) इत्यत्र नास्ति। तत्र हि मुख्यगौणस्थानक्रमेण विन्यासे ङञमणन (म्) इति स्यात्। परन्तु एवं सति ङम्प्रत्याहारे ञ-मावप्यन्तर्गतौ स्याताम्, येन सम्+आज इत्यत्र म् (उट्) इत्यागमे[८] सम्माज इति अनिष्टरूपं स्यात्। तद्वारणायात्र वैज्ञानिकं क्रममुल्लङ्घ्य ञमङणन (म्) इति वर्णविन्यासं कृत्वा ङम्प्रत्याहारे ङ-ण-ना एवान्तर्भाविताः।

(ग) झभ (ञ्), घढध (ष्) इति सूत्रद्वयेऽपि अ-इ-उ-ऋ ऌ इति मुख्य-गौणस्थानक्रम उपेक्षितः। अन्यथा घझ (ञ्), भढध (ष्) इति न्यासे भष्प्रत्याहारे घो नान्तर्गतः स्यात्। तथा सति गुहूधातोर्लृटि साम्प्रतं प्रवर्तमानो घो[९] न स्यात्, घोक्ष्यति इति च न सिध्येत्।

i) इत्थम्—ञमङणन (म्), झभ (ञ्), घढध (ष्), जबगडद (श्) इति माहेश्वरसूत्रस्थानां तिसृणां स्पर्शघोषश्रेणीनां तालव्यौष्ठ्य-कण्ठ्य-मूर्धन्य-दन्त्यक्रमेणावस्थापनम्,

ii) अघोषमहाप्राणस्पर्शानां खफछठथ ..... इति कण्ठ्यो-ष्ठ्य-तालव्य-मूर्धन्य-दन्त्येति भिन्नक्रमेणावस्थापनम्,

iii) अघोषाल्पप्राणस्पर्शानाम् एतत्क्रमद्वयात् पृथग्भूतेन ... चटत (व्) कप (य्) इति तालव्यमूर्धन्य-दन्त्य-कण्ठ्यो-ष्ठ्येति क्रमेणावस्थापनम्;

---

८. पा. टी. ३।८७

९. एकाचो बशो भष् झषन्तस्य स्ध्वोः—अष्ट०. (८।२।३७)

iv) वर्ग्यवर्णानां प्रतिलोमक्रमेणावस्थापनम् (यथा—प्रथमतः ञमङणन (म्) इति पञ्चमवर्णाः, ततो झभ ( ञ् ), घढध ( ष् ) इति चतुर्थवर्णाः, ततो जबगडद ( श् ) इति तृतीयवर्णाः, ततः खफछठथ...इति द्वितीयवर्णाः, ततः......चटत ( व् ), कप ( य् ) इति प्रथमवर्णाः) ।

v) हयवर ( ट् ), ह ( ल् ) इति स्थानद्वये ह-प्रदानम् (ह-य-व-र-(ट्) सूत्रे ह-ग्रहणाभावे अट्-प्रत्याहारे हो नान्तर्भवेत् । तेन अर्हेण इत्यत्र णो[10] न स्यात् । हल्सूत्रे ह-ग्रहणाभावे शल्प्रत्याहारे हो नान्तर्भवेत् । तेन अधुक्षत इत्यत्र ( क् ) सो[11] न स्यात्) ।

एतत्सर्वं तत्तत्प्रत्याहारेषु तत्तद्वर्णग्रहणेन शब्दसाधनरूपमुद्देश्यं मुख्यीकृत्य वैज्ञानिकं क्रमं चोल्लङ्घ्य प्रवर्तितम् ।

## ५४. तान्त्रिकवर्णमालाक्रमे वैज्ञानिकताया गौणत्वम्

अपरा चास्ति तन्त्रशास्त्रोक्ता वर्णमाला या खलु आधुनिक-भारतीयभाषाणामपि वर्णमाला भवति । अस्यां सर्वेऽपि माहेश्वरवर्णा विद्यन्ते । एतद्व्यतिरिक्ता केचिदधिका अपि वर्णा विद्यन्ते, येषु सन्ति (क) केचित् समध्वनयः (ख) द्वावयोगवाहौ (ग) एकः संयुक्तवर्णश्च ।

साम्प्रतमेतद्वर्णमालाद्वयगता वर्णास्तन्त्रक्रमेण सञ्जयित्वोप-स्थाप्यन्ते, यत्र माहेश्वरवर्णमालायामविद्यमाना वर्णा बन्धनीमध्ये क्षिप्यन्ते—

अ (आ) इ (ई) उ (ऊ) ऋ (ॠ) ऌ (ॡ) ए ऐ ओ औ [(अं)] [(अः)] क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह(क्ष) इति ।

अत्रानुस्वारविसर्गयोः पूर्वं स्थितः (अ) इति स्वरो वर्णमालाया अङ्गं न भवति; किन्तु तयोः पूर्वमवश्यं प्रयोक्तव्यस्य स्वरवर्णस्य प्रातिनिध्यं

१०. अट्कुप्वाङ्नुम्व्यवायेऽपि —तत्रैव (८।४।२)

११. शल इगुपधादनिटः क्सः —तत्रैव (३।१।४५)

सम्पादयति । आ ई ऊ ॠ ॣ इति दीर्घस्वराः पृथङ् निर्दिष्टाः। माहेश्वर-वर्णमालायां तु ह्रस्वस्वरप्रदानेन तत्सरूपा दीर्घा अपि गतार्था इति न तेषां पृथङ् निर्देशः। अयोगवाहत्वेन माहेश्वरवर्णमालायामुपेक्षितावपि अनुस्वारविसर्गौ अत्र गृहीतौ, तयोर्बहुलप्रयोगात्। तन्त्रशास्त्रीयवैशिष्ट्यात् वर्णद्वयात्मकोऽपि क्षोऽत्र प्रदत्तः।

सृष्ट्यारम्भे क्रमश आविर्भूतानां तत्त्वानां नाम्नो वा तदभिप्रायवाचकशब्दस्य वा प्रत्येकमेकैकाक्षरस्य तेनैव क्रमेण विन्यासे इयं वर्णमाला भवति, अयं क्रमश्च आयाति। शिवसूत्रविमर्शिन्या जगदीश-चन्द्रकृतायास्तट्टिप्पण्याश्च विचारपद्धतिमनुसृत्य एतद्वर्णमालया क्रमशः प्रतिपादितानि तत्त्वानि[१२] कोष्ठकमध्ये विन्यस्य प्रदर्श्यन्ते—

---

१२. (क) श्रीपरात्रिंशकादिनिर्दिष्टनीत्या अहंविमर्शप्रथमकला अनुत्तरा अकुलस्वरूपा प्रसरन्ती आनन्दरूपा सती इच्छा-ईशनभूमिका-भासनपुरस्सरं ज्ञानात्मिकाम् उन्मेषदशां ज्ञेयाभासासूत्रणाधिक्येन च ऊनतां प्रदर्श्य इच्छामेव द्विरूपां विद्युद्विद्योतनकल्पतेजोमात्ररूपेण स्थैर्यात्मना च एषणीयेन च रञ्जितत्वात् र-ल-श्रुत्या आरूषितेन अत एव स्वप्रकाशात्मीकृतमेयाभासत्वतः अमृतरूपेण मेयाभासा-रूषणमात्रतश्च बीजान्तरप्रसवासमर्थतया षण्डाख्यबीजचतुष्टयात्मना रूपेण प्रपञ्च्य प्रोक्त-अनुत्तर-आनन्द-इच्छासंघट्टेन त्रिकोणबीजम्, अनुत्तर-आनन्द-उन्मेषयोजनया च क्रियाशक्त्युपगमरूपम् ओकारम्, प्रोक्तैतद्बीजद्वयसंघट्टेन षट्कोणं शूलबीजं च इच्छाज्ञान-शक्तिव्याप्तक्रियाशक्तिप्रधानत्वात् शक्तित्रयसंघट्टनमयं प्रदर्श्य, इय-त्पर्यन्तविश्वैकवेदनरूपं विन्दुमुन्मील्य युगपदन्तर्बहिर्विसर्जनमय-विन्दुद्वयात्मानं विसर्गभूमिमुद्दर्शितवती, अत एव अन्तर्विमर्शनेन अनुत्तरे एव एतद्विश्वं विश्रान्तं दर्शयति, बहिर्विमर्शनेन तु कादिमान्तं पञ्चकपञ्चकम् अइउऋलृशक्तिभ्यः पुरुषान्तं समस्तं प्रपञ्चयति। एकैकस्याश्च शक्तेः पञ्चशक्तित्वमस्ति, इत्येकैकतः पञ्चकोदयः।

# कोष्ठकम्–२

## क्रमाविर्भूतसृष्टितत्त्वानुसारी वर्णक्रमः

| वर्णाः | तत्त्वानि | अभिप्रायाः |
|---|---|---|
| अ | (१) अनुत्तरः | न उत्तरः= पर इत्यनुत्तरः। इदं तत्त्वं कस्यापि परवर्ति न भवति, अतः सर्वप्रथमम्। अस्याविर्भावसमये गुणधर्मानुदयात् न कोऽपि गुणधर्मस्तत्त्वनाम्नः प्रकाशते। |
| | (२) अहम् | कैवल्ये स्थितस्य परमात्मनः 'सोऽहं'मित्यात्मकः प्रथमोदितः अहङ्कारः। |
| | (३) अकुलः | तत्त्वान्तरस्य तदानीमनुद्गतत्वात् कुलहीनः। |
| आ | आनन्दः | अ + अ > आ। मेलनात्मिकेयमानन्दशक्तिर्या आदितत्त्वमाधारीकृत्याविर्भूता। |
| इ | इच्छा (स्वरूपस्था) | विश्वसृष्ट्यै इच्छा। |
| ई | ईशनम् | तस्या एव इच्छायाः प्राबल्यम्। |
| उ | उन्मेषः | विश्वस्य ज्ञानात्मक उन्मेषः। |
| ऊ | ऊनता | ज्ञेयांशस्याभासे सति इतः पूर्वं सकलं परिव्याप्य स्थितस्य केवलस्य ज्ञानस्य साम्प्रतं संकोचादूनता। |

आभ्य एव शक्तिभ्यः शिक्षोक्तसंज्ञानुसारेण अन्तः षुंभूमौ नियत्यादिकञ्चुकत्वेन अवस्थानात् अन्तस्थाख्यान् प्रमातृभूमिधारणेन विश्वधारणात् धारणाशब्देन आम्नायेषु उक्तान् तदुपरि भेदविगलनेन अभेदापत्त्या उन्मिषितत्वात् ऊष्माभिधानान् चतुरो वर्णानाभासितवती। × × × × तदियत्पर्यन्तं यन्मातृकायास्तत्त्वं तदेव ककारसकारप्रत्याहारेण कूटबीजेन प्रदर्शितमन्ते। —शिवसूत्रविमर्शिनी (२।७ सूत्रस्था)

(ख) ऋ·ॠ इति इच्छायाः खलु द्विप्रकारायाः शून्यभुवमधिशयानायाः ज्ञानशक्तिसाचिव्येन तेजःस्पर्शित्वात् रश्रुत्या विद्युद्वत् विद्योतन-

| वर्णाः | तत्त्वानि | अभिप्रायाः |
|---|---|---|
| ऋ | अलुब्धा इच्छा | (क) अस्य तत्त्वस्य प्रथमाक्षरद्वयम् 'अलु' इति। कासुचिद् भाषासु ऋ-लृ इत्येतौ रु-लु इत्युच्चार्येते। तदनुसारेण अलु=अलृ। तेन नञः पर्युदासत्वात् लृभिन्न - लृसदृश इत्यर्थात् ऋकारोऽवगम्यते। अलुब्धा=अनासक्ता। (ख) र+इ>ऋ इत्यपि भवति। र इति अग्निबीजम्; इ इति इच्छा। तेन स्वरूपस्था विश्वनिर्माणेच्छा इदानीम् अग्निरूपाया ज्ञानशक्तेः साहचर्येण उद्दीप्ता इत्यायाति। |
| ॠ | दीर्घा अलुब्धा इच्छा | पूर्वोक्ता अलुब्धा इच्छा या खलु दीर्घीभूता। |
| लृ | लुब्धा इच्छा | लृ=लु, लि। अलुब्धा इच्छा क्रमशो लुब्धा जाता। लस्य पृथिवीबोजत्वात् इ-बोध्याया इच्छायाः पृथिवीवत् स्थिरत्वं सूच्यते। ऋ इत्यत्राग्निमये ज्ञाने स्थिता इच्छा इदानीं लमाश्रित्य जडा संवृत्ता। |
| ॡ | दीर्घा लुब्धा इच्छा | पूर्वोक्ता लुब्धा इच्छा या खलु दीर्घीभूता। |
| ए | अनुत्तरेण तन्निष्ठानन्देन वा तीव्रातीव्रेच्छाया गाढालिङ्गनम्। | अ-आ+इ-ई>ए। ईदृशाद् वर्णालिङ्गनादिदं तत्त्वं सूच्यते। अयं त्रिकोणबीजं कथ्यते। नूनमयं कदाचित् △ इति त्रिकोणाकृत्या लिख्यते स्म। त्रिकोणमिदं मिलिता अनुत्तरानन्देच्छाः सूचयति। |
| ऐ | वृद्धिमधिगतेन अनुत्तरेण आनन्देन वा तीव्रातीव्रेच्छाया गाढालिङ्गनम्। | अ-आ+ए (= अ-आ+इ-ई)-ऐ (=अ-आ+ए-ऐ)=ऐ-इत्यस्मादिदं तत्त्वस्वरूपं सूच्यते। अत्र पूर्वांशो न केवलम् अ-आ; ए-ऐ इत्यनयोः पूर्वांशघटकः अ-आ अपि। तेन ए-तुलनया ऐ अधिकपूर्वांशकः। तत्त्वे एकारादाधिक्यं तात्कालिकदेवनागर्यां च तादृशो लेखोऽस्य 'षट्कोण' इत्याख्यायां हेतुः स्यात्। |

| वर्णाः | तत्त्वानि | अभिप्रायाः |
| --- | --- | --- |
| ओ | अनुत्तरेण तन्निष्ठानन्देन वा ईषदनीषज्ज्ञानोन्मेषस्य गाढालिङ्गनम् । | अ-आ + उ ऊ > ओ । अयं सन्धिस्तत्त्वमिदं सूचयति । |
| औ | वृद्धिमधिगतेन अनुत्तरेण आनन्देन वा ईषदनीषदुन्मेषस्य गाढालिङ्गनम् । | अ आ + ओ (= अ-आ + उ-ऊ)-औ (= अ-आ + ओ-औ) > औ) । सन्धिरयं तत्त्वमिदं सूचयति । ऐवदत्रापि पूर्वांशाधिक्यम् । नूनं त्रिशूलमिवात्र अनुत्तरानन्दोन्मेषेति तत्त्वत्रयसत्त्वात् कदाचित् त्रिशूलाकृत्या लिप्या प्रकाशाच्च त्रिशूलबीजमिति अस्य नाम । अत्र ज्ञानस्य पूर्णोन्मेषात्तद्धेतुका क्रियाशक्तिः कृतपदा सती प्राधान्यं भजते । |
| (अ)ं | विन्दुः | अनुस्वारस्य लिपिरूपं विन्दुः । वेत्तीति विन्दुरिति विग्रहेण विन्दुशब्दः अनुत्तरादारभ्यैतावत्पर्यन्तं क्रमविकसितस्य तत्त्वजातस्य वेत्तारमेतत्सकलशक्त्यधिकारिणं पुरुषं द्योतयति । |
| (अ): | विविधसर्गहेतुः आद्याशक्तिः | अयं विन्दुद्वयरूपेण लिख्यते । स्वरगोष्ठीं व्यञ्जनगोष्ठीं चान्तरा स्थितस्य विन्दुद्वयात्मकस्य विसर्गस्यैको विन्दुः सकलस्वरप्रतिनिधीभूय वामभागेऽनुत्तरपर्यन्तं समालिङ्ग्य तत्र तत्त्वसमाप्तेरनुत्तरे एव सकलं विश्वं विश्रान्तमिति दर्शयति । अपरो विन्दुश्च दक्षिणभागस्थ सकलं व्यञ्जनमालिङ्ग्य अन्तपर्यन्तं गत्वा तावन्मात्रमेव विश्वप्रसारं सूचयति । विसृज्यतेऽन्तपर्यन्तं त्यज्यते एकेन विन्दुना स्वराख्यान्तर्भूमौ, अन्येन विन्दुना च व्यञ्जनाख्यबहिर्भूमौ युगपत्- इति विसर्गशब्दस्य विग्रह एतत्तत्त्वप्रकाशस्यानुकूलः । तेनायं विसर्गः सूक्ष्मस्थूलतत्त्वजातस्रष्ट्री आद्या शक्तिः प्रकृतिर्वा भवति । |

| वर्णा: | तत्त्वानि | अभिप्राया: |
|---|---|---|
| क-ख-ग-घ-ङ | शक्तिप्रसार: | अइउऋऌ इति तत्तत्तत्त्वप्रकाशिका भगवतः पञ्च-शक्तयः । तास्वेकैका शक्ति: पञ्चधा प्रसृता भवति । तेन अनुत्तरस्य पञ्चधा प्रसारः । |
| च-छ-ज-झ-ञ | शक्तिप्रसारः | स्वरूपस्थेच्छायाः पञ्चधा प्रसारः । |
| ट-ठ-ड-ढ-ण | ,, | अलुब्धेच्छायाः पञ्चधा प्रसार: । |
| त-थ-द-ध-न | ,, | लुब्धेच्छायाः पञ्चधा प्रसारः । |
| प-फ-ब-भ-म | ,, | उन्मेषस्य पञ्चधा प्रसार: । |
| य | नियतिः | इ-इति स्वरूपस्थेच्छाया आवृतभावेनावस्थानम् । नियतिशब्दे हि इच्छाया इ-वर्णाज्जात: मध्याक्षरी-भूतो 'य:' 'नि' 'ति' इत्यक्षराभ्यां कञ्चुकितः अन्तस्तिष्ठतीति तान्त्रिकविचारेण अन्तस्थत्वम् । व्याकरणनये त्वन्यत् । एवं राग-कला-विद्यास्वपि । |
| र | रागः | आ-इति अलुब्धेच्छायाः आवृतभावेनावस्थानम् । ऋवर्णो हि 'आग' इत्यनेनावृतो 'रागो' भवति । |
| ल | कला | ऌ इति लुब्धेच्छाया आवृतभावेनावस्थानम् । आदौ कः, अन्ते आः, मध्ये ऌकार: - एभिः कलाशब्दो घटितः । |
| व | विद्या | उन्मेषस्य आवृतभावेनावस्थानम् । उन्मेषस्यादिवर्णो हि इद्या इत्यनेनावृत: सन्धौ 'विद्या' इति भवति । |
| श | शक्त्युन्मेषः | स्वरूपस्थेच्छाया उन्मेष: । तान्त्रिका उन्मेषशब्दा-दूष्मशब्दस्य नैरुक्तिकीं व्युत्पत्तिं कुर्वन्ति । |
| ष | ,, | अलुब्धेच्छाया उन्मेष: । |
| स | ,, | लुब्धेच्छाया ,, |
| ह | ,, | अनुत्तरस्य ,, |

| वर्णाः | तत्त्वानि | अभिप्रायाः |
| --- | --- | --- |
| क्ष | सकलवर्णप्रतिनिधिः कूटबीजम् | आदिव्यञ्जनं कः,शक्त्यात्मकस्य ह-स्य द्विगुणित-विसर्गत्वात्[13] विसर्गस्य च शक्तिरूपत्वेन शिवात्मकवर्णेषु अग्रहणे[14] अन्त्यव्यञ्जनं सो भवति । तयोर्मिलितयोः स-स्य षत्वे ततः क्षो भवति । स च प्रत्याहारन्यायेन एतन्मध्यगतान् वर्णानपि बोधयति । तेन सकलानि व्यञ्जनान्यायान्ति । कः अ-स्य सारः, सश्च विसर्गस्येति अ-विसर्ग-मध्यगानां सर्वेषां स्वराणामप्ययं प्रतिनिधिः । |

वज्रावभासित्वम् । लृ-लॄ इति तस्या एव अत्यन्तं शून्यभुवि प्रसरन्त्याः किञ्चित् ज्ञानशक्तिराहित्येन काष्ठपाषाणरूपतामिव आददानाया लब्धृत्या स्थैर्यात्मकत्वेन विद्युद्विद्योतनकल्पमवभासनम् । × × × × अं इति एवमियत्पर्यन्तस्य विश्वस्य वेदनात्मकत्वेन विन्दुतया प्रथमं शक्तिमत्-परामर्शः । अः इति पूर्वोक्तस्य अनुत्तरस्यैव आनन्दशक्त्यविभक्तस्य विसर्गरूपतया शक्तिप्राधान्यपरामर्शः । परमेश्वरस्य शक्तयः पञ्च । तासामेकैकस्या अपि शक्तेः पञ्चकयोगः । तेन अनुत्तरात्प्रसृतस्य कवर्गस्य, इच्छायाः स्वरूपस्थाया जातस्य चवर्गस्य, लुब्धालुब्धात्मक-द्विप्रकाराया इच्छाया उद्भूतस्य टवर्गस्य तवर्गस्य च, उन्मेषादुत्पन्नस्य पवर्गस्य पञ्चकत्वम्—जगदीशचन्द्रटिप्पणी (२।७ शिवसूत्रस्था)

१३. पा. टी. २।९१

१४. मायाशक्त्यभिधः सर्गः सर्वभूतात्मकः प्रभुः ।
तस्मात्तस्यात्र विन्यासो नैकदेशे शिवात्मनि ॥
—पदार्थादर्शव्याख्या (२।१० श्लोकस्था)

अत्र स्वराणां स्वसम्पृक्तस्पर्शा-न्तस्थो-ष्मरूपेण कल्पितो विकास उच्चारणस्थानविवेचनामूलकत्वाद्वैज्ञानिकः। यथा— इकारस्य चवर्ग-य-शत्वेन विकास एतेषां तालुस्थानकत्वाधारेण सम्भवति। परन्तु एषु उच्चारणार्थकस्य वायोः उत्तरोत्तरगतिदौर्बल्यं नैव सूचितम्। यथा—स्वरोच्चारणे वायोः सबलत्वम्, अन्तस्थे दुर्बलत्वम्, ऊष्मोच्चारणे दुर्बलतरत्वम्, स्पर्शोच्चारणे दुर्बलतमत्वम्-इति एवं क्रमेण वर्णन्यासे वैज्ञानिकत्वं स्यात्। अपरं च—प्रथमं केवलं वर्णोच्चारणमासीत्, परवर्तिनि काले वर्णस्मारिकास्तत्प्रतिनिधिभूता विविधा लिपय उद्भाविताः-इति सत्ये स्थितेऽपि कालविशेषे प्रयुज्यमानाया देवनागरीलिप्या एव किञ्चिद्वर्णप्रतिनिधिरूपं गृहीत्वा तेन वर्णधर्मप्रकाशकत्वं कल्पितम्। यथा— विसर्गस्य साम्प्रतिकं बिन्दुद्वयात्मकं देवनागरीरूपं गृहीत्वा एकेन बिन्दुना स्वरसमूहस्य अन्येन च व्यञ्जनसमूहस्य समालिङ्गनरूपा कल्पना विहिता। एतत्सर्वं वस्तुतत्त्वप्रकाशे प्रतिबन्धकम्।

## ५५. ऋक्प्रातिशाख्योक्तवर्णमालाक्रमे वैज्ञानिकताया गौणत्वम्

तान्त्रिकवर्णक्रमेण अनेकधा समानो वर्णक्रम ऋक्प्रातिशाख्ये विलोक्यते। स खलु अ आ ऋ ॠ इ ई उ ऊ ए ओ ऐ औ ऌ कखगघङ चछजझञटठडढणतथदधनपफबभमयरलवहशषस (अ) : (अ)≍(क) (अ)≍(प) (अ)ं इति[१५]। (अ)≍(क) (अ)≍(प) इत्यत्र कपौ खफयोरुपलक्षणम्।

---

१५. अकारर्काराविउएओऐऔ
पदाद्यन्तयोर्नल्कारः स्वरेषु।
अकारादीन् दीर्घरूपान् द्वितीयान्
ह्रस्वेषु पञ्चस्वपि तानि सन्ति॥
कखौ गघौ ङः चछौ जझौ ञः
टठौ डढौ णः तथौ दधौ नः।
पफौ बभौ मः यरलवा हशषसा
अः≍क≍प अं इति वर्णराशिः क्रमश्च॥—ऋ.प्रा.(१।९।१)

तेन क≍करोतीत्यत्रेव क≍खनतीति, क≍पचतीत्यत्रेव क≍फलतीत्यपि भवति। यथा तन्त्रक्रमे तथाऽस्मिन् क्रमे स्वरस्पर्शान्तस्थोष्मणां क्रमिकी स्थितिर्वर्तते। किन्तु इमानि पार्थक्यानि भवन्ति—

(क) अंशत्रयघटितस्य ऋकारस्य प्रथमोऽंशः अ-इ-ऊ नां सूक्ष्मरूपः। तेन करोति, किरति, पुरम् इत्यत्र ऋस्थाने यथाक्रमम् अ-इ-उ इति भवन्ति। तस्मात् तेभ्यः कस्माच्चित्स्वरादनन्तरम् ऋकारे विन्यस्तव्ये प्रथमोपात्तस्वरात् अवर्णात्परं तस्य स्थापनं विहितम्। किञ्च ऋकारस्य जिह्वामूलीयत्व[१६]मिति मते कण्ठसविधे जिह्वामूलीयस्य स्थितत्वात् ऋकारस्य तत्र स्थापनं युक्तम्। शब्दस्याद्यन्तयोरप्रयुज्यमानः केवल-कॢप्धात्वाश्रयलृकारस्तु ऋ-वज्जिह्वामूलीयोऽपि अमुख्यत्वात्स्वरवर्णान्ते प्रक्षिप्तः।

(ख) सन्ध्यक्षराणां क्रमो माहेश्वरक्रमेण संवदति, न तु तान्त्रिकक्रमेण।

(ग) ऊष्मवर्णा उच्चारणस्थानानां क्रमिकतानुसारेण कण्ठ्यतालव्यमूर्धन्य-दन्त्यक्रमेणावस्थापिताः।

(घ) अयोगवाहवर्णाः प्रक्षिप्तवर्णोचिते स्थाने सन्निवेशिताः।

(ङ) पूर्वं विसर्गस्ततस्तदंशावर्धविसर्गौ निवेशितौ।

(च) मुखादुच्चार्यमाणेष्वयोगवाहेषु उच्चारणस्थानक्रमेण प्रथमं कण्ठ्यो (जिह्वामूलीयो वा) विसर्गः, तदनन्तरं जिह्वामूलीयः (अ)≍(कः), ततश्च ओष्ठ्यः (अ)≍(पो) निवेशितः। अनेन प्रकारेण मुखोद्गता-नयोगवाहान् समाप्य तत्पश्चान्नासिकास्थानकोऽनुस्वारः स्थापितः।

अत्रापि वर्णश्रेणीनां क्रमदौर्बल्यक्रम उपेक्षितः इति वैज्ञानिकक्रमः परिहृतः।

## ५६. प्रस्तुतसन्दर्भकल्पिते वर्णक्रमे वैज्ञानिकताया गौणत्वम्

शंसितवर्णक्रमाणां वर्णाः पूर्वापरभावेन पङ्क्तिबद्धाकारेण च सन्निवेशिता-भिर्लिपिभिः प्रकाश्यन्त इति एतद्वर्णक्रमैः वर्णानां परस्परसम्बन्धा यथोचितं नैव प्रतिपादयितुं शक्यन्ते। यथा—अआइईउऊ......अथवा अइउ (ण्)...

१६. पा. टी. २।१०२।

इत्यादिलेखे विन्यासभङ्गया अकारस्य इकारेण यावान् सम्बन्धः प्रकाशते, न तावान् उकारेण। एवं कखगघङच इति लिख्यमाने ङकारेण चकारस्य सम्बन्धभ्रमो जायते । एवं कप (य्) इति माहेश्वरसूत्रात् क-प-योर्मध्ये कश्चन संबन्धोऽस्तीति भ्रान्तिजायते ।

इत्थं वर्णमालाक्रमेषु वैज्ञानिकवर्णतत्त्वप्रकाशनविषये विद्यमाना-मपूर्णतामालक्ष्य तन्निरासार्थं कश्चिन्नूतनो वर्णक्रमः अत्र सन्दर्भे कल्प्यते। स च (१) आधुनिकवर्णविज्ञानम् (२) शिक्षाऽपरपर्यायं विविधप्राचीन-वर्णोच्चारणशास्त्रम् (३) विविधसंस्कृतव्याकरणम् (४) वैदिकव्याकरणम् (५) प्रातिशाख्यानि (६) तन्त्रशास्त्रम् (७) भाषाविज्ञानम् (८) निरुक्तम् (९) कोषाः (१०) आरोपीयभाषाणां तुलना—एषां भित्तिभूमौ प्रतिष्ठितः।

(१) असंबद्धेषु यः सम्बन्धभ्रमः प्राक् प्रदर्शितस्तस्य निराकरणम्, संबद्धवर्णानां मध्ये स्थितानामापेक्षिकसम्बन्धानां यथासम्भवं गाणितिक-रीत्या प्रदर्शनम् (२) श्रेणीविभागेषु वर्णानां सज्जा (३) वर्णानां परस्पर-विनिमयं पर्यालोच्य तद्भित्तिकं क्रममेकं च प्रकल्प्य तत्र वर्णानां यथायथं सन्निवेशः (४) वर्णानां विनिमयात्मकपरिवर्तने वर्णसंबन्धगतप्रभावाणां प्रकाशनम्—एतच्चतुष्टयमुद्दिश्य वर्णक्रमोऽयं चित्ररूपेण प्रदर्श्यते ।

अत्रापि वैज्ञानिको वर्णसन्निवेशक्रम उल्लङ्घितः ; किन्तु इतर-वर्णक्रमापेक्षया न्यूनमात्रया । कस्मात्कारणात् कुत्र कुत्र इदमुल्लङ्घनं कृतमित्येतद्विषये यथास्थानं विचारो विधीयते ।

संस्कृते विविधासु वर्णमालासु स्थितास्वपि[१७] तासु केषाञ्चित् समध्वन्ययोगवाहसंयुक्तवर्णानां विद्यमानत्वात् अतथाभूता माहेश्वरवर्णमाला चित्रे विन्यस्यते, केवलं तन्त्रव्याकरणादिषु महत्त्वं प्राप्तयोर्विसर्गानुस्वारयो-रधिकतया सन्निवेशः क्रियते ।

साम्प्रतं वर्णचित्रमुपस्थाप्यते—

---

१७. द्र. सं. स्व स. (पृ. १८८-१९२)

# वर्ण सज्जा (श्रेणी-सम्बन्ध-सूचिका)

**आभ्यन्तर प्रयत्न (क्षेत्र)-सूची**

| | |
|---|---|
| अ | स्वरा अस्पृष्टा वा |
| य | अन्तस्था ईषत्स्पृष्टा वा |
| श | ऊष्माणः अर्धस्पृष्टा वा |
| क | स्पर्शाः स्पृष्टा वा |

**बाह्य प्रयत्न सूची**

| | |
|---|---|
| क | अल्पप्राणाघोषाः |
| ख | महाप्राणाघोषाः |
| ---- | घोषाघोष-विभाजक रेखा |
| ग | अल्पप्राण-घोषाः |
| घ | महाप्राण-घोषाः |

**सवर्णानाम्, सस्थानानाम् अन्तरङ्गाणाम्, आश्रितानां च वर्णानां सूचिका रेखाः**

| | |
|---|---|
| ═ कण्ठ्य-सवर्णाः | — कण्ठ्य-सस्थानाः |
| ═ तालव्य-सवर्णाः | — तालव्य-सस्थानाः |
| ═ दन्त्य-सवर्णाः | — दन्त्य-सस्थानाः |
| ═ मूर्धन्य-सवर्णाः | — मूर्धन्य-सस्थानाः |
| ═ ओष्ठ्य-सवर्णाः | — ओष्ठ्य-सस्थानाः |
| | नासिक्य-सस्थानाः |

**वर्णेषु मिश्रिता अंशाः**

...... विसर्गांशः

-·-·- अनुस्वारांशः

------ हकारांशः

- - - कण्ठतालव्य सस्थानौ

- - - कण्ठोष्ठ्य-सस्थानौ

━ अन्तरङ्गाः

— आश्रिताः

## ५७. वर्णचित्रस्य सामान्यपरिचयः

वर्णचित्रे वर्णसञ्ज्ञाया भङ्ग्या रेखासंयोगेन च वर्णानां समुचितः क्रम आपेक्षिकं सामञ्जस्यं च प्रदर्शयितुं शक्यते। अत्र आभ्यन्तरप्रयत्नकृतं वर्णश्रेणीचतुष्टयं क्षेत्रनाम्ना कल्पितम्। क्षेत्रेषु ऊर्ध्वाधः क्रमेण अस्पृष्टेषत्स्पृष्टार्धस्पृष्टस्पृष्टप्रयत्नोच्चार्या वर्णश्रेण्यो विद्यन्ते। उभयश्रेणीलक्षणधारिणः पञ्चवर्णा उभयश्रेण्यन्तराले निवेशिताः। याज्ञवल्क्यशिक्षायां विसर्गानुस्वारयोस्तथा तदितरविविधवर्णश्रेणीनां पृथक् पृथक् रङ्गा अभिहिताः। यथा—'स्वराः शुक्लाः, स्पर्शाः कृष्णाः, अन्तस्थाः कपिलाः, ऊष्माणोऽरुणाः, अनुस्वारः पीतः, विसर्गः श्वेतः' इति[१८]। शुक्लश्वेतयोः समानपर्यायत्वे अमरसिंहेन प्रकाशितेऽपि[१९] अत्र स्वररङ्गात् शुक्लात् पृथक्त्वेन विसर्गस्य रङ्गोऽभिप्रेत इति तदर्थं भस्माभो रङ्गो गृहीतः। उक्तैस्तत्तद्रङ्गैः सकलानां वर्णानां रञ्जनस्यौचित्येऽपि शुक्ले पत्रे शुक्लानां स्वराणां विन्यासेऽसौकर्यमालक्ष्य तत् परिहृतम्। केवलं स्वरान्तस्थोष्मस्पर्शापरनाम्नाम् अस्पृष्टादीनां चतुर्णां क्षेत्राणां तत्तत्परिसररेखास्तत्तद्रङ्गैः रञ्जिताः। विसर्गार्थं पृथक् श्वेतपरिसरः, अनुस्वारार्थं च पीतपरिसरो विहितः, किन्तु पृथक्क्षेत्रं न कल्पितम्। इत्थमेकदिगन्ते सकलरङ्गाश्रयः शुक्लः, ततः क्रमविकासेन श्वेतपीतकपिलारुणाः, अपरदिगन्ते च सकलवर्णग्रासी कृष्णः इत्येतत् सृष्टितः संहारान्तं क्रमं सूचयति।

चित्रस्थाः ४४वर्णाः २०स्तरैर्विभक्ताः। स्तरनिर्देशार्थं वामे दक्षिणे च १तः २० पर्यन्तं संख्याः प्रदत्ताः।

केचिद्वर्णा बिन्दुमयाः कृताः, केचिच्च रेखामयाः। एतदुभयविधेषु केचित् कृशाः कृताः, केचिच्च स्थूलाः। तत्र बिन्दुमया घोषत्वं रेखामयाश्चाघोषत्वं सूचयन्ति। कृशा अल्पप्राणत्वं स्थूलाश्च महाप्राणत्वं द्योतयन्ति।

---

१८. या. शि. (पृ. १३)

१९. शुक्लशुभ्रशुचिश्वेतविशदश्येत पाण्डराः—अमरकोषः (१।५।१२)

ऊर्ध्वादधोलम्बिनी एका सूक्ष्मा विभाजिका रेखा चित्रे वर्तते, या घोषाघोषान् परस्परेभ्य: पृथक् करोति। अन्यासु रेखासु तिस्रोऽंश-मिश्रणसूचिका: । यथा—केषुचिद्वर्णेषु विसर्गांशोऽनुस्यूत इति प्रदर्शनाय विसर्गस्य द्विविन्दुमयत्वात् द्विविन्दुमयी एका रेखा विसर्गान्निर्गमय्य ख-छ-थ-ठ-मार्गेण फं प्रवेशिता। तथा हकारांशमनुस्यूतं प्रदर्शयितुं कल्पिता क्षुद्रा खण्डितरेखा हकारान्निर्गमय्य घ-भ-ब-ढान् क्रमशः प्रवेश्य परिशेषे भे विश्रमिता । विन्दुपरपर्यायस्यानुस्वारस्यांशो ङेऽनुस्यूत इति प्रदर्शनार्थमनुस्वारो ङेन विन्दुशीर्षकरेखाखण्डैः संयोजित: । इतरा: संयोजकरेखा भवन्ति। तासु द्वे आश्रयसम्बन्धं प्रकाशयत:, अन्याश्च सामञ्जस्यसम्बन्धम् । अकारस्याधो विन्दुकेन्द्रकं त्रिकोणं विद्यते, यत् स्वरकेन्द्रमिति कल्पितम् । कस्यचिद्वर्णस्य सर्वै: स्वरैः सह सम्बन्धे सिसूचयिषिते तैः सर्वैः साकं रेखा-संयोजनरूपगौरवपरिजिहीर्षया कल्पनेयं कृता । स्वरकेन्द्रेण सह विसर्गानुस्वारयोः संयोजिका रेखा आश्रयसम्बन्धं द्योतयति, तेन सह ऋ-लृ-संयोजिका च परिवर्तनबीजभूतं सम्बन्धम । इतरा रेखाश्च (यथा—क-ग-मध्यगता रेखा)सामञ्जस्यसम्बन्धं प्रकाशयन्ति । किं च स्पृष्टक्षेत्रगता सरलरेखा एकविध, तिर्यग्रेखा (यथा—क ख-गता) चान्यविधं सम्पर्कं प्रकाशयति । एवमेकस्य स्पृष्टवर्णस्य अन्येन स्पृष्टवर्णेन सह सम्बन्धं प्रकाशयन्त्यो दीर्घक्षुद्रा द्विविधा: सरलरेखा द्विविधसामञ्जस्य प्रदर्शयन्ति ।

आश्रयरेखाद्वयं समानाकारम्, सावर्ण्य-सस्थानत्वा-न्तरङ्ग-रेखाणामाकारस्तु वर्णसन्निवेशाधीन इति तासां समानाकारत्वं न सार्वत्रिकम्। सस्थानत्वस्यान्तरङ्गत्वेऽपि वैशिष्ट्यप्रदर्शनाय पृथङ्निर्देशः।

अत्र युग्मिका:, सार्धैकिका एकिकाश्च रेखा विविधरङ्गरञ्जिता वर्तन्ते। तत्र युग्मिका सावर्ण्यम्, सार्धैकिका च संयोजितयोर्वर्णयोरेकतरस्य एकस्थानोच्चार्यत्वम्, अन्यतरस्य च क्रमेण द्विस्थानोच्चार्यत्वं प्रकाशयति। एकिका कृशा कृष्णवर्णरेखा आश्रयम्, स्थूला चान्तरङ्गत्वम्, इतरतत्तद्रङ्गरेखा च तत्तत्सस्थानतां प्रकाशयति। अधुना एतत्सर्वं क्रमशः सविस्तर प्रकाश्यते।

५८. क्षेत्रसञ्ज्ञा

सर्वाणि क्षेत्राणि वर्णानामाभ्यन्तरप्रयत्नमनुरुध्य प्रवर्तितानि। प्रतिक्षेत्रं तत्तदाभ्यन्तरप्रयत्नोच्चार्या एकवर्णश्रेण्येव निवेशिता। आभ्यन्तरप्रयत्ननिरूपणञ्च केषुचिद् ग्रन्थेषु समानं केषुचिच्चासमानं कृतम्[20]। तत्सकलक्रोडीकारेण क्षेत्रसञ्ज्ञनमसौकर्यसम्पादकमिति विचार्य तन्मध्यात् उच्चारणस्थानकरणयोः स्पर्शास्पर्शौ भित्तीकृत्य कल्पितं पाणिनीयशिक्षागतं विभाजनमेवात्रानुसृतम्; सिद्धान्तकौमुदीकृतस्थानप्रयत्नविवेचने अस्य सन्दर्भस्य विविधस्थानेषु गृहीतेऽपि तत्रोक्तस्य स्वरोष्मव्यञ्जनयोरेकप्रयत्नत्वस्य महाभाष्यासम्मतत्वेन अप्राशस्त्यात्[21]।

परस्परप्रत्यक्षसामञ्जस्यशीलौ कावपि वर्णौ यथा विप्रकृष्टक्षेत्रगतौ न स्याताम्, यथा च एकस्मिन् क्षेत्रे, सन्निकृष्टक्षेत्रे वा तिष्ठेताम्, तथैव क्षेत्रसञ्ज्ञाऽत्र विहिता। तद्विवरणं साम्प्रतं कोष्ठकेन प्रदीयते।

## कोष्ठकम्—३

### क्षेत्राणामवस्थितिः

| क्षेत्रम् | सन्निकृष्टक्षेत्रम् | विप्रकृष्टक्षेत्रम् |
|---|---|---|
| अस्पृष्टम् | ईषत्स्पृष्टम् | अर्धस्पृष्टम्, स्पृष्टम् |
| ईषत्स्पृष्टम् | स्पृष्टम्, अर्धस्पृष्टम्, स्पृष्टम् | × |
| अर्धस्पृष्टम् | ईषत्स्पृष्टम्, स्पृष्टम् | अस्पृष्टम् |
| स्पृष्टम् | अर्धस्पृष्टम्, ईषत्स्पृष्टम् | अस्पृष्टम् |

२०. द्र. सं. स्व. स. (प. ४, पृ. ११२)

२१. नाज्झलौ (१।१।१०) इत्यष्टाध्यायीसूत्रं सिद्धान्तकौमुद्यां गृहीतम्। उच्चारणस्थाने आभ्यन्तरप्रयत्ने च समानेऽपि स्वरव्यञ्जनयोः सावर्ण्यं

(क) अस्पृष्टक्षेत्रम्

चित्रे प्रथमतः अस्पृष्टानां स्वराणां क्षेत्रं विद्यते, ततश्च क्रमवर्धमानेन करणस्पर्शनोच्चार्यमाणानामीषत्स्पृष्टादीनां व्यञ्जनानां क्षेत्राणि। व्यञ्जनेभ्यः प्रथमं स्थानमदत्त्वा स्वरेभ्यस्तत्स्थानदानस्य कारणानि तु—

(i) स्वरोच्चारणं सुकरम्, व्यञ्जनोच्चारणं तु दुष्करम्।

(ii) स्वराः सबलाः, व्यञ्जनानि तु दुर्बलानि। उच्चारणे करणभूताया जिह्वाया ओष्ठस्य वा स्पर्शभित्तौ हि वर्णानां सबलत्वदुर्बलत्वे प्रतिष्ठिते। स्वरोच्चारणकाले करणमुच्चारणस्थानं न किञ्चिदपि स्पृशतीति वायुप्रवाहो निर्बाधं निःसरति, सबलश्च भवति। व्यञ्जनोच्चारणकाले तु तत्तन्मात्रया स्पर्शो भवति। स्पर्शो यावानधिकाधिको भवति, वायुप्रवाहस्तावतीमधिकां बाधां लभमानो दुर्बलतां भजते। वायुप्रवाहश्च वर्णानां निमित्तमिति तस्य दुर्बलत्वं सबलत्वं वा वर्णेषूपचर्यते। तेन वर्णः सबलो दुर्बलो वेति व्यवहारः।

(iii) स्वयं राजन्त इति स्वराः — इति विग्रहपक्षे स्व इत्युपपदपूर्वकात् राजधातोः डप्रत्यये स्वरशब्दः सिध्यति। स्वर एव इतरमनपेक्ष्य उच्चारितो भवतीति तस्य स्वयं राजमानत्वम्। व्यञ्जनं तु स्वरानुगतं

---

निषेधति सूत्रमिदम्। सिद्धान्तकौमुद्युक्तप्रयत्नविभागानुसारेण अ-स्य ह-स्य च कण्ठोच्चार्यत्वात् विवृतप्रयत्नकत्वाच्च सावर्ण्ये सति दधि + हरति इत्यत्र हम् अकारेण समानं परिकल्प्य तत्पूर्वस्थस्य इकारस्य सन्धिसूत्रेण यत्वं स्यात्। किन्तु नाज्झलौ (१।१।१०) इति सावर्ण्यनिषेधात् तन्न भवतीति पाणिनेरभिप्रायः।

भाष्यकारस्तु स्वरव्यञ्जनयोः पृथक्प्रयत्नपक्षं स्वीकृत्य 'सिद्धमनच्त्वात्' (१।१।१० सूत्रस्थम्) इति वार्तिकमुपस्थाप्य एतत्सूत्रस्यानावश्यकतां प्रत्यपादयत्। स च पृथक्प्रयत्नपक्षः पाणिनीयशिक्षायां गृहीतः।

भूत्वैवोच्चार्यते, न तु स्वरवत् स्वयमुच्चार्यते। इत्थम्भूतां स्वरशब्दस्य व्युत्पत्तिं स्वरव्यतिरेकेण व्यञ्जनस्य अनुच्चार्यतां वाख्याय, महाभाष्यकारः व्यञ्जनस्य स्वरानुगत्वं नटभार्यादृष्टान्तमुखेन प्रत्यपादयत्[२२]। रङ्गमञ्चगतो यो यो दर्शको नटीः पृच्छति-"यूयं कस्य कस्ये"ति, तं तमेव नट्यः कथयन्ति- "तव तवे"ति। तद्वत् येन येन स्वरेण सह व्यञ्जनानि तिष्ठन्ति, तस्य तस्याधीनतां व्रजन्तीति दृष्टान्तदार्ष्टान्तिकभावः।

यथा बलिष्ठो राजा दुर्बलं राजानमाक्रम्य तस्य राज्यं हरति, तथा स्वरो व्यञ्जनं प्राप्य पूर्णभावेनायत्तीकरोति—इत्युक्त्वा माण्डूकी शिक्षाऽपि व्यञ्जनस्य स्वरायत्तत्वं प्रतिपादयति[२३]।

(iv) स्वर्यन्ते शब्द्यन्ते उच्चारणविषयीक्रियन्ते व्यञ्जनान्येभिरिति स्वराः, स्वरन्ति शब्दायन्ते इति स्वराः—इति द्विविधोऽपि विग्रहः स्वराणां व्यञ्जनापेक्षया प्राधान्यं प्रकाशयति।

(v) व्यञ्जनानि स्वराणां विकृतिरूपेण प्रपञ्चसारतन्त्रे शिवपञ्चाक्षरविवरणे च गृहीतम्[२४]।

---

२२. (क) स्वयं राजन्त इति स्वराः। अन्वग् भवति व्यञ्जनम्।
—म. भा. (१।२।३० सूत्रस्थम्)

(ख) न ह्यचमन्तरेण व्यञ्जनस्योच्चारणमपि भवति—तत्रैव (१।२।२६ सूत्रस्थम्)

(ग) व्यञ्जनानि पुनर्नटभार्यावद्भवन्ति। तद् यथा नटानां स्त्रियो रङ्गगता यो यः पृच्छति कस्य यूयं कस्य यूयमिति तं तं तव तवेत्याहुः। एवं व्यञ्जनान्यपि यस्य यस्याचः कार्यमुच्यते, तं तं भजन्ते। —तत्रैव (२।१।२ सूत्रे)

२३. दुर्बलस्य यथा राज्यं हरते बलवान् नृपः।
स्वरो व्यञ्जनमासाद्य हरते नात्र संशयः॥ (६४)

२४. (क) मूलार्णमर्णविकृतीर्विकृतेर्विकृतीरपि।
... ... ... ...सर्वानित्यमुवाच ह—प्र. सा. त. (१।२०-२१)

विसर्गानुस्वारौ प्रथमद्वितीयक्षेत्रयोः परिसरमध्येऽवस्थापितौ येन विविधग्रन्थप्रतिपादितं तयोः स्वरव्यञ्जनोभयश्रेणीकत्वं प्रकाशितं स्यात्। तथा हि—

(१) पतञ्जलिना स्वरेषु व्यञ्जनेषु चानयोः स्थानं कल्पितम्[२५]।

(२) अस्पृष्टप्रयत्नत्वात्[२६] स्वरान्तरैः सह अनयोः साम्यम्, अनुस्वारस्य च स्वरव्यञ्जनोभयरूपत्वं[२७] शौनकेन निगदितम्।

(३) शक्तिरूपाद्विसर्गात् क्रमशः स्वरव्यञ्जनात्मकाः सर्वे वर्णाः सृष्टा इति अहिर्बुध्न्यसंहिता[२८]।

(४) देवनागरीलिपौ विसर्गार्थं बिन्दुद्वयलेखः, विसर्गस्य विसर्जनीयेति नामान्तरम्, वर्णमालायां स्वराणामन्ते व्यञ्जनानां चादौ तस्य निवेशः—एतेषां रहस्यमुद्‌घाटयन्त्यां शिवसूत्रविमर्शिन्यां कथितं यत्—एकस्यां दिशि एकेन बिन्दुना स्वररूपान् अन्तर्वर्णान्, अन्यस्यां दिशि च बिन्द्वन्तरेण व्यञ्जनरूपान् बहिर्वर्णान् युगपदेव स्व(विसर्ग)देहात् विसर्जनाय

---

(ख) मूलाणं शक्तिबीजम्। अर्णविकृतीर्हकाररेफमायार्णविकृतित्वेन वक्ष्यमाणाः स्वराः(?तान्)। विकृतीनां स्वराणां विकृतीः। कादिक्षान्ता विकृतेर्विकृतयः। —शिवपञ्चाक्षरविवरणम् (१२० श्लोकस्थम्)

२५. अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाटस्योपसंख्यातत्वेन —सि. कौ. (१।३८ सूत्रस्था)

२६. स्वरानुस्वारोष्मणामस्पृष्टं स्थितम् —ऋ. प्रा. (१३।३)

२७. अनुस्वारो व्यञ्जनं वा स्वरो वा —तत्रैव (१।११)

२८. एवंभूता क्रियाशक्तिस्तत्तद्वाच्यविवक्षया।
शब्दरूपं समास्थाय कूटस्थं व्यक्तिवर्जितम्॥
सा यात्यनुत्तरं स्पृष्टा कण्ठे शक्तिर्विसर्गिणी।
पुनः साऽनुत्तरे स्थित्वा चतुर्दशविभाविनी॥
अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम्।
ततः सादिमयी भूत्वा कान्ता व्यञ्जनशालिनी॥
अनुत्तरमयी भूयो बिन्दौ संप्रतितिष्ठति—अ.बु.सं.(१६।६३-६६)

[ (१) त्यागाय (२) विविधात्मकभावेन सर्जनाय वा ] जातस्याभिलाषस्य सूचकमिदम्[२९]।

(५) विसर्गः खलु सिसृक्षात्मिकाया अनिर्वचनीयाया महासत्तायाः क्रियाशक्तेः प्रथमरूपपरिग्रह इत्यहिर्बुध्न्यसंहिता[३०]।

(६) तान्त्रिका विसर्गानुस्वारौ स्वरं मन्यन्ते[३१]।

(ख) ईषत्स्पृष्टक्षेत्रम्—

स्वरक्षेत्रात्परं त्रीणि व्यञ्जनक्षेत्राणि। तत्र प्रथममीषत्स्पृष्टक्षेत्रम्। इदमर्धस्वरक्षेत्रत्वादन्तस्थक्षेत्रं भवति। अन्तः स्वरव्यञ्जनयोर्मध्ये तिष्ठन्तीत्यन्तस्था अर्धस्वराः।

अस्मिन् क्षेत्रे य-र ल-व-इति चत्वारोऽन्तस्थवर्णाः समावेशिताः। न-म-इत्येतावपि एतस्य क्षेत्रस्य चतुर्थक्षेत्रस्य च परिसरे विन्यस्तौ तयोः अर्धस्वरत्वं स्पर्शव्यञ्जनत्वं चेत्युभयमतं क्रोडीकुरुतः।

तत्रार्धस्वरत्वपक्षो यथा—

(i) कल्पितायां प्राचीनभारोपीयभाषायामेतौ अन्तस्थरूपेण परिगणितौ[३२]।

(ii) करणस्पर्शस्य अप्राधान्यं वीक्ष्य आधुनिका वर्णविदः स्थलविशेषेषु वर्ग्यानुनासिकवर्णान् स्पर्शवर्णमध्ये न गणयन्ति। इदं ध्वनिविज्ञानग्रन्थस्य प्रथमचित्रादवगम्यते। तत्र गोलोकबिहारी धलः अनुनासिकस्पर्शवर्णान् स्वराणां विपरीतान् असदृशांश्च स्वीकुर्वन्नपि नासिकोत्पन्नव्यञ्जन-

---

२९. पा. टी. ५।१२ (क)

३०. अनाख्येया महासत्ता क्रियाशक्तिः क्रमेण सा।
शब्दात्मना विवर्त्स्यन्ती सा पुरा याति सृष्टिताम्॥
सृष्टिः सर्गो विसर्गश्च विसर्जनमितीदृशैः —अ. बु. सं. (१६।५६-५७)

३१. स्वराख्याः षोडश प्रोक्ताः —प्र. सा. त. (३।२)

३२. आदिम भा. यू. भाषामें य्, व्, र्, ल्, न,म्, ये छः अन्तस्थ माने गये हैं। — संस्कृतका भाषाशास्त्रीय अध्ययन (पृ. ४९)

वर्णान् कोमलतायोगात् स्वरैः साकमधिकसादृश्यभाजः शंसति[३३]। अयमनयोरीषत्स्पृष्टत्वे सङ्केतः।

(iii) प्राकृतव्याकरणे संयुक्तवर्णस्याधः स्थितानां षण्णां वर्णानां लोपोऽनुशिष्टः। ते खलु वर्णा य-र-ल-व-म-नाः, नान्ये[३४]। इदं न-म-यो र्य-र-ल-वैः साम्यं सूचयति।

(iv) व्यञ्जनसन्धौ हकारात्परं य-व-ले-षु स्थितेषु हकारपूर्ववर्ती मः यथा यँ-वँ-लँ इति भवति, तथा म-न-योः स्थितयोः म्-न् इति भवतीति व्याकरणे वर्त्तते[३५]। उदाहरणानि— किम् + ह्यः > कियँ ह्यः; किम् + ह्वलयति > किवँ ह्वलयति; किम् + ह्लादयति > किलँ ह्लादयति; किम् + ह्मलयति = किम्ह्मलयति; किम् + ह्नुते > किन्ह्नुते।

(v) ओडिआभाषायां क्य-क्र-क्ल-क्व-क्म-क्न इत्येषां लेखे य-र-ल-व-म-ना ओडिआलिपौ କ୍ୟ, କ୍ର, କ୍ଲ, କ୍ୱ, କ୍ମ, କ୍ନ इत्यादौ आंशिकभावेन लिख्यन्ते, येषां नाम 'फला' (=अर्धम्) इति कथ्यते। एते षडेव 'फला'रूपेण व्यवह्रियन्ते, नान्ये। अत्रापि य-र-ल-व-वत् न-म-योः फलात्वेनोपयोगात् साम्यं सुस्पष्टम्।

स्पर्शव्यञ्जनत्वपक्षः—

(i) सर्वेऽपि भारतीयप्राचीनमनीषिणः एतौ वर्णमालायां स्पर्शवर्ण-मध्ये क्षिपन्ति।

---

३३. व्यञ्जनों में से निरनुनासिक स्पर्श स्वरध्वनियोंके पूर्णतः विपरीत तथा असदृश हैं। परन्तु नासिक्यव्यञ्जन अपनी कोमलताके कारण स्वरोंसे अधिक सादृश्य रखते हैं। —ध्वनिविज्ञान (पृ. १४४)

३४. पा. टी. ३।१२

३५. (क) यवलपरे यवला वेति वक्तव्यम् —सि. कौ. (१७ सूत्रस्था)
(ख) हे मपरे वा, नपरे नः —अष्टा. (८।३।२६, २७)

(ii) आपिशलिः वर्ग्यतृतीय-पञ्चमवर्णयोः आनुनासिक्यवर्जं सर्वतोभावेन साम्यं शंसति[३६]।

अर्धस्वरत्व-स्पर्शव्यञ्जनत्वेत्युभयपक्षः —

माहेश्वरवर्णसञ्ज्ञा ईषत्स्पृष्टस्पृष्टेत्युभयक्षेत्रे चित्रे न-म-स्थितिं समर्थयते । तत्र प्रसिद्धानन्तस्थवर्णान् हयवर (ट्),ल् (अण्) इत्यत्र सन्निवेश्य स्पर्शवर्णसन्निवेशारम्भे ञमङणन (म्) इति सूत्रमवतारितं येन वर्ग्या अनुनासिकवर्णाः प्रसिद्धान्तस्थेभ्यो य-व-र-ले-भ्यः परं झभ(ञ्) इत्यादिस्थ-स्पर्शवर्णेभ्यः पूर्वं चावस्थापिताः स्युः। इत्थमीषत्स्पृष्टस्पृष्टवर्णश्रेणीमध्ये स्थापिता वर्ग्यपञ्चमवर्णाः स्वकं द्विस्वभावत्वं प्रकटयन्ति।

यद्यपि चित्रे न-म-वत् ङ-ञ-णा-नामपि क्षेत्रद्वये सन्निवेशः प्रागुक्तरीत्या उचितस्तथापि ते न-मयोर्विकृतिरूपा इति तेषां व्यवहारश्च भाषायां सङ्कुचित इति स न कृतः। ईषत्स्पृष्टक्षेत्रसमीपस्थे स्पृष्टक्षेत्रस्य दक्षिण-भागान्ते तेषामवस्थापनात् कयाचिन्मात्रया ईषत्स्पृष्टत्वं प्रकाशितं भवत्येव।

(ग) अर्धस्पृष्टक्षेत्रम्—

ईषत्स्पृष्टक्षेत्रानन्तरं स्पृष्टक्षेत्रात्पूर्वं च अर्धस्पृष्टक्षेत्रम्। इदं तावत्तृतीयक्षेत्रम्। श-ष-स-इति वर्णत्रयम् अर्धस्पृष्टप्रयत्नरूपेण पाणिनीय-शिक्षायां परिगणितम्[३७]। तेन तत्त्रयं तृतीयक्षेत्रे सन्निवेशितम्। ईषत्स्पृष्टवर्णार्थं जिह्वाया या स्पर्शमात्रा अपेक्षिता भवति, तदपेक्षयाऽधिक-स्पर्शमात्रा अर्धस्पृष्टार्थमपेक्ष्यते। इयं च स्पृष्टवर्णोच्चारणार्थं क्रियमाणाया मात्राया न्यूना भवति। अर्धस्पृष्टवर्णोच्चारणे पूर्णस्पर्शाभावादेव जिह्वा-मुच्चारणस्थानं चान्तरा सूक्ष्मोऽवकाशस्तिष्ठति। अत एव मुखविवरे रुध्यमानस्यापि वायुप्रवाहस्य तेनावकाशेन कयाचिन्मात्रया निःसरणमव्या-हतमेव तिष्ठति। एतेन वर्णा अनुवर्तनशीलाः (continuent) सम्पद्यन्ते।

---

३६. ये ये तृतीयास्ते ते पञ्चमाः, आनुनासिक्यमेषामधिको गुणः।
—आ. शि. (४।६, ७)

३७. पा. टी, २।१०६

तान्त्रिकवर्णक्रमे ईषत्स्पृष्टानां य-र-ल-वा-नां परस्तात् अर्धस्पृष्टेषु श-ष से-षु विन्यस्तव्येष्वपि प्राक्प्रतिपादितदिशा प्रत्याहारसिद्धेः शब्दसाधनस्य च माहेश्वरसूत्राणां मुख्योद्देश्यत्वात् तदुद्देश्यसिद्धावन्तरायमाशङ्क्य माहेश्वरसञ्ज्ञायां न तथा विन्यासो विहितः, प्रत्युत ईषत्स्पृष्टान् अर्धस्पृष्टांश्च वर्णान् अन्तरा स्पृष्टवर्णा अवस्थापिताः। तथा हि—माहेश्वरसञ्ज्ञादिशा हश्प्रत्याहारमध्ये ह-य-व-र-ल-ञ-म-ङ-ण-न-झ-भ-घ-ढ-ध-ज-ब-ग-ड-दाः समापतन्ति। ईषत्स्पृष्टानन्तरमर्धस्पृष्टनिवेशने तु तन्मध्ये शषसा अप्यन्तर्गताः स्युः। एवं सति देवः+शत्रुरित्यत्र पाणिनिसूत्रेण उत्वे[३८] देवो शत्रुः इत्यनीप्सितं रूपं स्यात्। स्पृष्टवर्णानन्तरमर्धस्पृष्टवर्णानां स्थापने तु नायं दोषः प्रसज्यते।

बहवो विद्वांसः श-ष-स-हेति वर्णचतुष्टयमेकश्रेणीकं मन्यन्ते। प्रायश एते चत्वार ऊष्मवर्णत्वेन व्यपदिश्यन्ते। सर्वासु शिक्षासु श-ष-सानां ह-स्य च तुल्य आभ्यन्तरप्रयत्नः शंसितः; केवलं पाणिनीयशिक्षा ह-स्य आभ्यन्तरप्रयत्नः श-ष-सा-नामाभ्यन्तरप्रयत्नात् पृथगिति प्रतिपादयति[३९]। केचित् भाषाविज्ञानविदो हिन्दी हं संघर्षिणं, हिब्रू डच्-जर्मानी-अरबी-गतं कंचित् हं च स्पृष्टं मन्यन्ते[४०]। अतोऽयं तृतीयक्षेत्रे आंशिकभावेन सन्निवेशितः।

स्पृष्टक्षेत्रम्—

अवशिष्टवर्णोच्चारणे जिह्वाया ओष्ठस्य वा उच्चारणस्थानेषु पूर्णस्पर्शो भवति। अतएव स्पृष्टक्षेत्रे तान् कादीन् मान्तान् पञ्चविंशतिवर्ग्यवर्णान् निवेश्य वर्णचित्रं समापितम्। अस्मिन् क्षेत्रे हकारोऽप्यांशिकभावेन विन्यस्तः।

## ५६. हकारस्य वैशिष्ट्यम्

वस्तुतस्तु केचित्तान्त्रिका बहुभिर्वर्णैः हं-स्य सम्पर्कं प्रकाशयन्तीति स सर्वेषु क्षेत्रेषु निवेशयितव्यः। तथाहि—

---

३८. हशि च —अष्टा. (६।१।११४)

३९. द्र. सं. स्व. स. ( कोष्ठकम् ८)

४०. द्र. भाषाविज्ञान (अ. ७, पृ. २४५)

(१) अस्मादेव वर्णात् सर्वाणि व्यञ्जनान्युत्पन्नानीति मालिनीवार्तिकम्[४१]।

(२) सर्वे स्वरा अपि ह-स्य प्रकृतेर्विसर्गाज्जाता इति अहिर्बुध्न्यसंहिता[४२]।

(३) शक्तिरूपत्वात् हः सकलव्यञ्जनानामाधारः, प्राणरूपत्वाच्च सकल-स्वराणामाधार इति प्रपञ्चसारतन्त्रलिखितस्य श्लोकपादस्य[४३] अभिप्राय इति पद्मपादाचार्यः[४४]।

(४) तेन चोक्तं यत्— ह इत्युक्त्वा विष्णुर्ब्रह्माणं हकारे गर्भितं ह्रीमिति बीजं सर्वस्वरव्यञ्जनानि च बोधयामास[४५] इति ।

(५) आदिवर्णेन अ इत्यनेन अन्त्यवर्णेन ह् इत्यनेन च हो घटितः। तेन आदितोऽन्तपर्यन्तं स्थितानां सकलवर्णानां ग्रहणम् । किं च अ-ह्, इति वर्णद्वयं नादाकार-बुद्धिप्राण-ज्ञानशक्तिक्रियाशक्ति-प्रकाश-विमर्श-चिदानन्देति तत्त्वद्वयानां रूपेण सकलाक्षरेष्वनुगतम् । सर्वशब्दसर्वार्थरूपत्वाच्च परावाग्रूपोऽयं हकारः सर्वात्मकः प्रकृतिपुरुष-कालात्मको नित्यश्च । अयं विचारोऽपि शिवपञ्चाक्षरविवरणे प्रकटितः[४६]।

---

४१ पा. टी. २।६१

४२. सा यात्यनुत्तरं स्पृष्ट्वा कण्ठे शक्तिर्विसर्गिणी ।
पुनः साऽनुत्तरे स्थित्वा चतुर्दशविभाविनी ॥
अनुत्तरोत्तरा याति कण्ठे हेति विजृम्भणम् ।—अ.बु.सं. (१६।६४-६५)

४३. सोष्मा सप्राणकस्तु हः । —प्र. सा. त. (३।६६)

४४. कथं तर्हि हकारस्यैव पूर्वं सर्ववाचकत्वमुक्तमिति । नायं दोषः, हकारस्यापि उभयात्मकत्वादित्याह-सोष्मा सप्राणकस्तु हः । ऊष्मा= बलम्=शक्तिः=प्रकृतिः; स एव प्राणः कः? प्राणस्य प्राणः = पुरुषः। शिवपञ्चाक्षरविवरणम् ( प्र. सा. त.स्य ३।६६स्थम् ) ।

४५. पा. टी. ५।२४

४६. हकारो हि अकारहकारात्मा । तयोश्चाद्यन्ताक्षरयोः प्रत्याहारग्रहण-न्यायेन गृहीतेतरवर्णयोः नादाकाररूपेण बुद्धिप्राणरूपेण ज्ञानशक्ति-क्रियाशक्तिरूपेण प्रकाशविमर्शरूपेण चिदानन्दरूपेण वा सर्ववर्णाद्यनु-

(६) माहेश्वरवर्णमालायां ह-स्य द्विरुपादानस्य व्याकरणीयमुद्देश्यं प्राक् (अधि. ५३) प्रकाशितम्। अधुनोक्ता तस्य स्वरव्यञ्जनोत्पादकताऽपि स्वरान्ते व्यञ्जनान्ते च ह-स्थापनस्य हेत्वन्तरमिति प्रतिभाति ।

एतद्विवेचनदिशा हकारो न केवलमर्धस्पृष्टस्पृष्टक्षेत्रयोः, अपिच अस्पृष्टेषत्स्पृष्टक्षेत्रयोर्विन्यस्तव्यः । किन्तु चित्रे क्षेत्रचतुष्टये ह-विन्यासस्यासौकर्यात् न तथा कर्तुं पारितम्। अत: अस्पृष्टेषत्स्पृष्टक्षेत्रयोस्तस्य विन्यासाभाव: अपूर्णतां द्योतयत्येव। ऋक्प्रातिशाख्येऽयमस्पृष्टत्वेन कथित[४७] इति विशेषत: अस्पृष्टक्षेत्रेऽस्य स्थापनं समुचितमेव स्यात्। अस्पृष्टेषत्स्पृष्टक्षेत्रान्तरालेऽवस्थितो विसर्गः शास्त्रवर्णितस्वविषयकतथ्यं प्रकाशयति, हकारार्धरूपत्वाच्च[४८] हकारस्य प्रातिनिध्यं करोतीति कल्पनायामियमपूर्णता कथञ्चिद्दूरीभवेत् । सम्प्रति विंशतिस्तरविशिष्टे चित्रे दशमस्तररूपे केन्द्रस्थले निवेशितो हः सकलवर्णैः सह स्वसम्पर्कं प्रकाशयति ।

माहेश्वरसूत्राणि वर्णाकारेण समुत्पन्नानीति हः तत्तत्प्रयोजनसिद्धये द्विः प्रयुक्तः। यदि लिप्याकृतीनां कुण्डलितभावेन सज्जा विधीयेत, तदा द्विः प्रयोगस्यावश्यकतैव न स्यात् । अधुना स्वरान्ते व्यञ्जनारम्भे चैको हकारो वर्तते, व्यञ्जनान्ते चान्यः। कुण्डलितसज्जायां तु एकत्रावस्थितोऽपि स्वरादौ, स्वरान्ते, व्यञ्जनादौ, व्यञ्जनान्ते च स्वसम्पर्कं प्रकाश्य न केवलं स्वरव्यञ्जनस्रष्टृत्वं सङ्केतयेत्, अपि च महता आकारेण स्वं महत्त्वं प्रकटयन् चतुर्ष्वपि क्षेत्रेषु स्वावस्थितिं सूचयन् प्रागुक्तापूर्णतां पूर्णतया निराकुर्यात् । एतत्प्रदर्शनार्थमत्रैकां कुण्डलीं कल्पयित्वोपस्थाप्यते ।

---

गमात् सर्वशब्दार्थसमष्ट्यात्मकपरावागात्मत्वेन सर्वात्मत्वात् प्रकृतिपुरुषकालात्मत्वं नित्यत्वं चावगन्तव्यम्। —तत्रैव ।

४७. स्वरानुस्वारोष्मणामस्पृष्टं स्थितम् —ऋ. प्रा. (१३।३)

४८. विसर्ग is less than ह... ... ...—A Practical Grammar of the Sanskrit Language (Chap. 1, P. 7)

# माहेश्वर-वर्ण-कुण्डली



## ६०. अवर्णस्य वैशिष्ट्यम्

चित्रे प्रथमक्षेत्रे प्रथमस्तरे सर्वोर्ध्वस्थाने स्वस्तरस्य एककवर्णभावेन बृहता आकारेण स्थापितः अधो विविधस्तरेषु अर्धवृत्ताकारेणावस्थितैः स्वरैर्वेष्टितः अः वर्णमालायां स्वप्राधान्यमभिव्यनक्ति । तत्प्राधान्यस्य इमानि कारणानि भवन्ति—

(१) अयं सर्वप्रथमस्थानात् कण्ठादुच्चार्यते ।

(२) ह्रस्वस्य अ-स्य उच्चारणावस्था स्वाभाविक्या उच्चारणहीनतावस्थाया निकटवर्तिनी । अस्योच्चारणे करणमल्पमेव सक्रियं भवतीति इतरवर्ण तुलनयाऽऽयासो न्यूनो भवति ।

(३) ह्रस्वः अः अविकृतघोषरूपः; अस्य विविधविकृतौ जिह्वाया विविध-मात्रया उत्थानं भवति, येन विविधस्वरा उच्चार्यन्ते । इदं W. S. Allen— कथनादुपलभ्यते[४९] ।

(४) घोषव्यञ्जनोपयोगी वायुप्रवाहः अकारेण प्रयोज्यते इति तेनैव प्रकटितम्[५०] । अयमत्राभिप्रायो यत् यस्य कस्यचिद् घोषव्यञ्जनस्योच्चारणे क्रियमाणे प्रथमं सामान्यतोऽकारोच्चारणप्रक्रियामवलम्ब्य परस्ताद् घोषव्यञ्जनविशेषाणां कृते पृथक्पृथगुच्चारणप्रक्रियाऽऽश्रीयते —इति ।

(५) श्रवणविज्ञानमपि अवर्णस्य सर्वाधिकं मुखरत्वं प्रतिपादयति[५१] ।

---

४९. अ is interpreted as 'vocalic neutrability' as 'unmodified voice' on which are superimposed the vowel articulations involving various degree of tongue-raising —Phonetics in Ancient India (Part. 2, Sect. 2-10, P. 59)

५०. अ is······capable of ... providing the appropriate air-stream for the voiced Consonants —तत्रैव (Part 1, Sect. 2.10, P. 60)

५१. Of all of the sounds, अ is generally the most sonorous —General Phonetics (Chap. 4, Sect 307, P. 74)

(६) केवलं ह्रस्वः अः संवृतप्रयत्नेनोच्चार्यत इति भट्टोजीदीक्षितः[५२]। केवलम् आः विवृतप्रयत्नेनोच्चार्यत इति उव्वटः[५३], अतिविवृततमप्रयत्नेनेति शाकटायनः[५४], चन्द्रश्च[५५]। केवलमेकवर्णाय ईदृशपृथक्प्रयत्नव्यवस्थाऽन्यत्र नास्ति।

(७) अस्य व्यापकता ईदृशी यत्, व्यञ्जननिर्देशवेलायां साधारणतोऽयं व्यञ्जनेन सह प्रयुज्यते। यथा— क-ख (क्+अ=क, ख्+अ=ख), न तु कि-खि, कु-खु इत्यादि।

(८) ए-ऐ इति द्वयोरेव इकारांशो वर्तते, ओ-औ इति द्वयोश्च उकारांशः। परन्तु एषु चतुर्ष्वपि अकारांशोऽस्ति। स च प्रथमोऽंशो भवति।

(९) बहुभाषावर्णमालानामयं प्रथमो वर्णः। यथा संस्कृतस्य, तद्भव-भाषाणां तेलुग्वादीनां च वर्णमालासु अ-आ-इ-ई, ग्रीक्वर्णमालायाम् आल्फा-बिटा, इङ्गिलशवर्णमालायाम् A-B-C-D, सामि (Semitic) वर्णमालायाम् अबजद-इत्यादि (अधि. ९, पृ. ४४)।

(१०) अन्ये स्वराः परवर्तिनं सं षरूपेण परिणमयितुं प्रभवन्ति, न तु अः। यथा— लतासु, नदीषु, भानुषु इत्यादि। इदं स्वरान्तरेभ्योऽस्य वैशिष्ट्यं सूचयति।

(११) य-व-र-ल-स्थाने जायमाना इ-उ-ऋ-लृ इति वर्णाः पाणिनिव्याकरणे सम्प्रसारणसंज्ञां धारयन्ति[५६], न तु कस्यचिद्वर्णस्य स्थाने जायमानः अः। इदमपि अ-स्य वैशिष्ट्यान्तरम्।

---

५२. ह्रस्वस्यावर्णस्य प्रयोगे संवृतम्। —सि. कौ. (१० सूत्रस्था)

५३. विवृतास्यप्रयत्ना इतरे —उ. भा. (शु. य. प्रा. १।७२स्थम्)

५४. अवर्णस्यातिविवृततमम्—शाकटायनप्रक्रियासंग्रहः (१।१।६ सूत्रस्थः)

५५. ताभ्यामप्याकारस्य—चान्द्रवर्णसूत्राणि (२९)

५६. पा. टी. २।४३

(१२) अकार एक एव सर्ववर्णस्वरूपो भवतीति ऐतरेयारण्यकस्य दर्शनम्[५७]।

(१३) अकारे सर्ववर्णास्तिष्ठन्तीति शिवसूत्रविमर्शिन्यामुद्धृतमाप्तवाक्यम्[५८]।

(१४) सकलवर्णेषु अयं कुलेश्वर इति तन्त्रसारः[५९]।

(१५) नन्दिकेश्वर इमं वर्णं सर्ववर्णेषु प्रथमं परमेश्वररूपं चाह[६०]। सर्वप्रथम-वर्णत्वात् तन्त्रशास्त्रेऽस्य अनुत्तर इति नाम। अयं च सकलवर्णरूपं धत्ते इति तत्रत्यो विचारः[६१]।

(१६) श्रीकृष्णो भगवद्गीतायामात्मानं वर्णमध्ये अकारमाह[६२]।

(१७) सृष्टेरारम्भे ओंकारः, अथशब्दश्च ब्रह्मणः कण्ठं भित्त्वा स्वयं निर्गता-विति नारदपुराणम्[६३]। तत्र अः ओमित्यत्र वर्तमानस्य ओकारस्य प्रथमोऽशः; अथ इत्यस्य च प्रथमो वर्णः।

---

५७. अकारो वै सर्वा वाक्। सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति। —ऐतरेयारण्यकम् (२.३.६)

५८. अवर्णस्थो यथा वर्णः स्थितः सर्वगतः प्रिये।
तथाऽहं कथयिष्यामि निर्णयार्थं स्फुटं तव ॥
—शि. सू. वि. (२।३ शिवसूत्रस्था)

५९. इत्येवमेष भगवाननुत्तर एव कुलेश्वररूपः। —त.सा. (आ. ३, पृ. १६)

६०. अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः। —काशिका (श्लो. ४)

६१. अ इत्यादिसमुन्मेषः सोऽनुत्तर उदीर्यते।
सर्वा वागयमेवैकस्तत्तदाकारभेदवान् ॥ —अ. बु. सं. (१६।४५)

६२. अक्षराणामकारोऽस्मि (१०।३३)

६३. ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥
—नारदपुराणम् (भागः-१, अध्यायः १।१०)

(१८) अः दर्शनप्रसिद्धचतुर्व्यूहे प्रथमव्यूहस्य वासुदेवस्य सूचक इत्येकाक्षरकोशः[६४]।

(१९) मालिनीवार्तिकमिमम् अकुलं परभैरवं चाह[६५]।

एतत्सकलविवेचनमनुसृत्य सर्वप्रथममुपरिभागे अकारो विन्यस्तः। तस्य च सकलवर्णोत्पादनसूचनार्थं शुक्लश्वेतकपिलारुणकृष्णेति पञ्चभिर्वर्णानां रङ्गै रञ्जितस्य वृत्तस्य मध्ये स्थापनं विहितम्। केवलं नासिक्यः पीतरङ्गो वृत्ते नास्ति, अकारस्य अननुनासिकत्वात्।

माहेश्वरसूत्रावल्याम् अस्मै एकवर्णाय अकाराय स्वतन्त्रस्थानाप्रदानस्य सम्भाव्यकारणं खलु— तथा करणे अकारार्थं स्वतन्त्रसूत्रं रचनीयं स्यात्। किंच प्रतिसूत्रान्तेऽनुबन्धवर्णप्रदानपद्धतिमनुसृत्य एकोऽनुबन्धवर्णश्च तत्सूत्रार्थं कल्पयितव्यः स्यात् (व्याकरणोद्देश्यसाधिकामित्संज्ञामन्तरा यस्य किमपि प्रयोजनं नास्ति, सोऽनुबन्धः)। इत्थमेकवर्णानन्तरमपि एकोऽनुबन्धः प्रथमसूत्र एव प्रदत्तः स्यात्। एवं सति अनुबन्धदानस्य मुख्यमुद्देश्यं व्याहतं स्यात्। अनुबन्धस्य मुख्यमुद्देश्यं खलु इत्संज्ञामूलिका प्रत्याहारसंज्ञासिद्धिर्येन संक्षिप्तोक्त्या तत्तदनुबन्धसीमामध्ये स्थितानां बहूनां वर्णानां परामर्शात् लघूपायेन शब्दसाधनं सम्भवेत्। अत्र अकारबोधार्थम् अः, तदनन्तरवर्तिव्यञ्जनं च यदि प्रत्याहारः क्रियेताम्, तर्हि बोध्यैकवर्णापेक्षया बोधकसंज्ञा अधिकवर्णघटिता सती प्रत्याहारकरणोद्देश्यं व्याहन्यात्, विना लाभं च प्रत्याहारकरणमसमीचीनं स्यात्। मन्यामहे, इदं विवेचनं माहेश्वरसूत्रावल्यां केवलाकारार्थं कर्तव्ये स्वतन्त्रसूत्रनिर्माणे प्रतिबन्धकीभूय वर्णध्येतॄणां वैज्ञानिकसञ्ज्ञोपेक्षायां हेतुरजनि।

---

६४. अकारो वासुदेवः स्यात् (श्लो. १)

६५. अनुत्तरस्याकारस्य परभैरवरूपिणः।
अकुलस्य परा येयं कौलिकी शक्तिरुत्तमा॥ —मालिनीवार्तिकम्
[त. सा. (३।१४) मुकुन्दरामशास्त्रिकृतटिप्पण्यामुद्धृतम्]

## ६१. स्तरसञ्ज्ञा

स्तरः - १—

उच्चार्यमाणाः सर्वे यद्यपि वर्णा इति एकेनैव सामान्यशब्देनोच्यन्ते, तथापि तेषु स्वगता भेदा वर्तन्त एव । तत्तद्भेदान् विचार्यात्र सर्वे वर्णा विंशतिस्तरेषु स्थापिताः। तत्र प्रथमस्तरे सकलवर्णोत्पत्तिहेतुः अः स्थापितः। इतरसमानस्वरयोरपेक्षया अ-स्य प्रागुक्तवैशिष्ट्यसत्त्वात्तौ नात्र स्तरे निवेशितौ । सर्वे स्वरा द्विविधाः, अनुनासिका अननुनासिकाश्च । वर्णमालासु अननुनासिका एव वर्तन्ते। ते अनुनासिकानामपि प्रतिनिधिभूताः। तदनुकृत्य अत्रापि सर्वे अननुनासिकाः स्वरा दत्ताः । तान्त्रिकादिवर्णमालासु दीर्घस्वराणां स्थितावपि माहेश्वरादिवर्णमालासु केवलं ह्रस्वा दीर्घाणामपि प्रातिनिध्यं कुर्वन्तीति[६६] दर्शं दर्शं ह्रस्वोऽपि दीर्घप्लुतयोः प्रत्यायक इति शुक्लयजुः प्रातिशाख्योक्तं स्मारं स्मारमत्र[६७] ह्रस्वस्वरा एव दत्ताः।

स्तरः - २—

द्वितीयस्तरे इ-उ इत्येताववस्थापितौ। त्रिभ्यो मुख्योच्चारण-स्थानजस्वरेभ्यः कण्ठ्यस्य अकारस्य विन्यासानन्तरम् तालव्य इः, ओष्ठ्य उश्च स्थापनीयौ । प्रथममाहेश्वरसूत्रे 'अइउण्' इत्यत्र एते त्रय एवानेन क्रमेणावस्थापिताः। इ-उ-वत् ऋ-लृ-इत्येतावपि समानस्वरौ; परन्तु तौ र-ल-इति व्यञ्जनांशमिश्रितौ । ए-ऐ-ओ-औ इत्येते च एकाधिकस्वर-घटिताः। अ-इ-उ इत्येते तु अमिश्रिताः समानस्वराः। अत एव न ऋ-लृ-इत्येतौ, न वा ए-ऐ-ओ-औ इत्येते अस्मिन् स्तरेऽवस्थापिताः। माहेश्वर-वर्णसञ्ज्ञायामपि ऋ-लृ-ए-ऐ-ओ-औ-इत्येषां पृथक्सूत्रत्रय एवावस्थापनं कृतम्।

यद्यपि मुखविवरगतस्थानक्रमानुसारेण तालुनः पूर्वमोष्ठाच्च परं मूर्धदन्तस्थानम्, ततश्च तालव्यस्य इकारस्यानन्तरं मूर्धन्यस्य ऋकारस्य तदनन्तरं च दन्त्यस्य लृकारस्य स्थापनमुचितम्, तथापि अत्र उच्चारणस्थानानां

---

६६. द्र. सं. स्व. स. (प. ५, पृ. १८८–१९२)

६७. ह्रस्वग्रहणे दीर्घप्लुतौ प्रतीयात् (१.६३)

पूर्वोक्तं मुख्यगौणक्रम(अधि. ५१)मादृत्य प्रथमतो मुख्यस्थानोद्भवा अ-इ-उ-वर्णाः स्थापिताः । ऋ-लृ इति गौणस्थानोत्पन्नौ वर्णौ पश्चान्न्यस्तौ।

इ-उ-भ्याम् ऋ-लृ-इत्यनयोः पार्थक्यान्तरमपि विद्यते । यथा—

(i) कचित् इ-उ-वर्णानन्तरं य्-व् इति सजातीयान्तस्थवर्णौ भवतः। यथा—सुधी + औ > सुधियौ, चेक्री + अ > चेक्रिय, भू + औ > भुवौ, पोपू + अ > पोपुव । पाणिनिव्याकरणदिशा इयङुवङोः क्षेत्रमिदम्[६८] । ऋ-लृ-इत्याभ्यां परमीदृश आगमः कदापि न भवति ।

(ii) देव्यै, वध्वै; देव्याः, वध्वाः; देव्याम्, वध्वाम्—इत्थम् इकारो-कारान्तयोर्यानि रूपाणि भवन्ति, तैः सह मात्रे, गम्ले; मातुः, गमुल्; मातरि, गमलि-इत्येषाम् ऋ-लृकारान्तरूपाणां तुलनायां कृताया-मसमानता परिदृश्यते ।

एतत्सर्वं केवलयोः इ-उ-इत्येतयोर्द्वितीयस्तरे स्थापने हेतुः ।

स्वरकेन्द्रम्—

अस्य स्तरस्य मध्यभागे अ-इ-उ-इति स्वरत्रयस्य केन्द्रस्थले त्रिकोणचिह्नं कल्पितम्, तन्मध्ये विन्दुश्च प्रदत्तः। अयं विन्दुस्त्रिकोणं च मिलित्वा स्वरकेन्द्रमिति नामिते । बिन्दुः स्वरकेन्द्रस्य केन्द्रविन्दुर्भवति । त्रिभुजस्य भुजत्रयम् अ-इ उ-इति वर्णत्रयं प्रति उन्मुखीभवति। विविध-वर्णानां परस्परसम्बन्धप्रदर्शनोद्देशेन प्रस्तुतेऽस्मिन् वर्णचित्रे केषाञ्चिद्वर्णानां सकलस्वरैः सह सम्बन्धप्रदर्शनमावश्यकं भवति । एतदुद्देश्यसिद्धये सर्वान् स्वरान् तांश्च वर्णानन्तरा सम्बन्धसूचकरेखादानं कर्तव्यमासीत् । किन्तु तन्न कृतम् । अ-इ-उ-इत्येते तदितरस्वराणामुत्पादका यथायथमंशाश्च भवन्तीति अ-इ-उ-केन्द्रस्थले स्वरकेन्द्रमवस्थाप्य केवलं तेनैवैकेन रेखासंयोगं कृत्वा लघुनोपायेनोद्देश्यसाधनं कृतम् ।

---

६८. अचि श्नुधातुभ्रुवां य्वोरियङुवङौ —अष्टा. (६।४।७७)

स्वरोत्पादकत्वे प्रमाणमहिर्बुध्न्यसंहितायां वर्तते[६९]। इतरस्वरांश-घटितत्वमनेन प्रकारेण सम्पद्यते—

ए-ऐ-इत्येतौ अ-इ-भ्याम्, ओ-औ-इत्येतौ च अ-उ-भ्यां घटितौ। साम्प्रतिके ऋ-लृ-इत्युच्चारणे च र-ला-भ्यां सह कश्चित् स्वरांश आयात्येव।

स्तरौ—३, ४

एतावत्पर्यन्तं तान्त्रिकपद्धतेर्माहेश्वरसूत्रपद्धतेश्च वर्णक्रमेण वर्णचित्रस्य क्रमः संवदति। परन्तु एतदुभयपद्धतौ अ-इ-उ- इत्येभ्यः परम् ऋ-लृ इत्यनयोः स्थापनेऽपि केचिदेव तौ शुद्धस्वरौ कल्पयन्ति, बहवस्तु व्यञ्जनसङ्कीर्णौ स्वरौ मन्यन्त इति वर्णसञ्जायां ऋ-लृ-इत्याभ्यां प्राक् स्वरघटितानाम् ए-ओ-ऐ-औ-इत्येषां सन्निवेशः कृतः। तेभ्योऽपि ए-ओ इति तृतीयस्तरे, ऐ-औ इति च चतुर्थस्तरे निवेशितौ। तत्र हेतुस्तावत्—

(i) ए-ओ इति विवृततरौ, ऐ-औ इति च विवृततमौ[७०]।

(ii) केषाञ्चिन्मते ए-ओ इत्यनयोः अकारांशः संवृतः, केषाञ्चिन्मते च विवृतः; ऐ-औ इत्यनयोर्विवृत इति तु सर्वसम्मतमेव[७१]।

(iii) माहेश्वरवर्णक्रमेऽपि तृतीयसूत्रे ए-ओ-इति संस्थाप्य चतुर्थसूत्रे ऐ-औ इति स्थापितौ।

---

६९. एत एव त्रयो वर्णाः सर्वस्वरविभावनाः (१६।४६)

७०. द्र. स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥ —पा. शि. (२१)

७१. केचित्तु—'ए-ओ इत्यनयोः संवृतावर्णत्वे मानाभावः, ह्रस्वाकार-व्यतिरिक्तायां विवृतत्वस्यैवाइउण्सूत्रे भाष्ये उक्तत्वात्' प्रत्यापत्ति-शास्त्रस्यावयवे प्रवृत्तौ मानाभावात्,शास्त्रदृष्ट्या तस्या सिद्धत्वाच्च चिन्त्य-मिदमित्याहुः। अन्ये तु एतद्भाष्यप्रामाण्यात् ऐ-औ इत्यनयोरकारांशे संवृतत्वमेव, एतरांश एव विवृतत्वम्। तदुपरागाच्च न संवृतत्वस्य लोके प्रयोगे स्पष्टमवभासः। ऐ-औ इत्यनयोस्त्वकारांशेऽपि विवृतत्वमेव इत्याहुः। —उद्द्योतः (१।३।१०स्थभाष्यस्थः)

क्रमिकभावेनाविर्भूतस्य सृष्टितत्त्वसमूहस्य प्रतिबिम्बभूतान् वर्णांस्तेनैव क्रमेण सञ्चयति तान्त्रिकवर्णक्रमे ए-ऐ-ओ-औ इति क्रमेणाव-स्थिता वर्णा यद्यपि पूर्वोक्तविवृततरविवृततमक्रमं व्याघ्नन्ति, तथापि ए-ऐ इत्यनयोः कण्ठतालव्यत्वम्, ओ-औ इत्यनयोः कण्ठोष्ठ्यत्वं चेति अन्यविधः क्रमस्तत्र विद्यत एव। किं च तालुनः प्राथम्यात् प्रथमत ए-ऐ इत्यनयोः, ओष्ठस्य च तदुत्तरत्वात् पश्चात् ओ-औ इत्यनयोरवस्थितियुक्तैव। परिवर्तन-प्रदर्शनार्थके चित्रे तु स्वार्थसिद्धये माहेश्वरवर्णक्रम एवानुसृतः। किं च तृतीयचतुर्थस्तरावेकीकृत्य पाठे विवृततरविवृततमक्रमोऽप्यायात्येव।

स्तरः — ५

अयं केवलम् ऋ-लृ-वर्णार्थमुद्दिष्टः। समानस्वर-सन्धिस्वरानन्तरं स्वर-व्यञ्जनमिश्रणात्मकयोरेतयोर्न्यासः समुचितः। अनुस्वारविसर्गौ न स्वरव्यञ्जनमिश्रणात्मकौ, अपि तु स्वररूपेण व्यञ्जनरूपेण वाऽभ्यूहितौ। किं च ऋ-लृ इति पूर्णवर्णौ वर्णान्तरमनाश्रित्याप्युच्चारयितुं शक्येते। अनुस्वारविसर्गौ तु न तथा, पराश्रयत्वात्। अतो नात्र स्तरे तौ गृहीतौ।

स्तरः — ६

अस्मिन् स्तरे विसर्गानुस्वाराववस्थापितौ। एकस्मिन्नेव स्तरे-ऽनयोरवस्थापने हेतुस्तु उभावप्ययोगवाहवर्णौ। एतयोर्वैशिष्ट्यं क्षेत्रसञ्ज्ञा-प्रसङ्गे विवेचितम्। तादृशवैशिष्ट्याभावान्नान्योऽयोगवाहश्चित्रे गृहीतः। स्वरव्यञ्जनोभयरूपेण स्वीकृतयोरनयोः स्वरस्तराणां समाप्तौ व्यञ्जनस्तराणां चारम्भे अस्मिन् स्तरे स्थानं कल्पितम्।

स्तरः — ७

अत्र य-वौ सन्निवेशितौ। यद्यपि प्रायः सर्वासु वर्णमालासु स्वरवर्णान्ते क-ख-दिस्पर्शव्यञ्जनानि स्थानं लभन्ते, तथापि माहेश्वरवर्ण-मालाक्रममनुसृत्यात्र अस्पृष्टेषत्स्पृष्टादिक्रमानुसरणात् क-खादिविन्यासो न कृतः। अत्र एक एव हो विन्यस्तः, न तु माहेश्वरवर्णमालायामिव द्वौ। तस्मात् पर-हकारं माहेश्वरक्रमानुसारेण संस्थाप्य अत्र सन्निवेश्यः पूर्वहकारो

वर्जितः। पाणिनिव्याकरणे सम्प्रसारणभावेन परिवर्तमानाऽन्तस्थश्रेणी यथा ह-रहिता विद्यते, तथाऽत्रापि। किञ्चात्र निर्णीतपद्धत्या विसर्गस्य ह-प्रतिनिधिरूपेण ग्रहणे माहेश्वरवर्णक्रमेण सह अयं वर्णक्रमोऽपि संवदत्येव।

र-लौ सम्प्रसारणरूपेण गृहीतावपि अन्तस्थरूपेण च परिगणितावपि नात्र क्षेत्रे निवेशितौ। तत्कारणं तु य-वा-पेक्षया एतयोः पार्थक्यम्। तथाहि—

(क) र-ल-योः सम्प्रसारणरूपे ऋ-ऌ इत्यत्र केषाञ्चिन्मते र-ल-व्यञ्जनांशयोरवस्थितिरस्ति; य-व-योः सम्प्रसारणरूपे इ-उ-इत्यत्र तु न कोऽपि व्यञ्जनांशोऽस्ति।

(ख) य-वौ मुख्योच्चारणस्थानादुत्पद्येते, र-लौ तु गौणोच्चारणस्थानात्।

(ग) र-ल-योः स्वतन्त्रां प्रकृतिमभिलक्ष्य भाषाविज्ञाने तौ द्रवित (liquid) वर्णरूपेण गृहीतौ, न त्वन्तस्थरूपेण। य-वौ तु न तथा। एवं यवौ कुत्रचिल्लघुप्रयत्नतराविति निर्देशो वर्तते पाणिनिव्याकरणे[७२], लेशाविति च तैत्तिरीयप्रातिशाख्ये[७३]। र-लौ तु न तथा।

स्तरः — ८

अत्र र-लौ अवस्थितौ। उच्चारणस्थानक्रमेण उच्चार्यमाणा य-र-ल-वा अनेनैव क्रमेण तान्त्रिकवर्णक्रमे स्थिताः। अत्र तु मुख्य-गौणोच्चारणस्थानक्रमेण विन्यासात् य-व र-ल इति क्रमो जातः। सप्तमाष्टम-स्तरौ एकीकृत्य वामतः पाठे तु तान्त्रिकः क्रमः समायाति।

हयवर(ट्), ल् (अण्) इति माहेश्वरसूत्रयोरेकस्मिन् रः, अपरत्र च लः स्थितः। एकस्मिन्नेव सूत्रे र-ल-योरविन्यासो व्याकरणीयोद्देश्य-सिद्धिफलकः। तथाहि— एकत्र र-ल योर्विन्यासे कर्तव्ये हयवरल् (अट्) इति सूत्रं निर्मितं स्यात्। तथा सति अट् प्रत्याहारे लोऽप्यन्तर्गतः स्यात्।

---

७२. पा. टी. २।१८

७३. पा. टी. २.१८

तेन च 'कमलानि' इत्यत्र पाणिनिसूत्रानुसारेण[७४] णत्वप्रवृत्त्या 'कमलाणि' इत्यनिष्टरूपं स्यात् । अतो नैकत्र तौ स्थापितौ । अन्यथा यथा ऋलृ (क्) सूत्रे ऋ-लृ इति सम्प्रसारणरूपयोरेकत्र विन्यासः कृतस्तथा सङ्कोचनरूपयो र-ल-योरप्येकत्र विन्यासः कृतः स्यात् ।

हः यवौ रश्चेति परस्परं पृथक्स्वभावा वर्णाः । तेषां पृथक् सूत्रत्रये स्थापनं युक्तम् । परन्तु हयवर (ट्) इत्यत्र ते एकत्रावस्थापिताः । अस्य सम्भाव्यो हेतुस्तावत् — यदि पृथग्विन्यासः क्रियेत, तर्हि हयवर(ट्) इत्येकसूत्रस्थाने सूत्रत्रयं भवेत् , प्रतिसूत्रं चैकोऽनुबन्धवर्णो निवेश्येत, येन गौरवं स्यात् । तथा कृते च न किमपि अधिकं व्याकरणीयोद्देश्यं सिध्येत् । अतस्तथा न कृतम् ।

स्तरः — ९

अस्मिन् स्तरे श-स-षा अनेनैव क्रमेण निवेशिताः । माहेश्वर-वर्णमालायां तान्त्रिकवर्णमालायां च स्थितः श-ष स-इति क्रमः अत्रोपेक्षितः । यद्यपि उच्चारणस्थानक्रमानुसारेण श-ष-स इति क्रमो युक्तस्तथापि वर्ण-परिवर्तनप्रदर्शनं चित्रस्यैकतममुद्देश्यमिति एवं कृतम् । बहुत्र सः शरूपेण षरूपेण वा परिवर्तनं भजत इति तयोर्मध्ये स्थितः सस्ताभ्यां नैकट्यं सामञ्जस्यं च सूचयति । स-स्य दन्त्यत्वात् पूर्वोक्त (अधि. २८)रीत्या दुर्बलतमः सन् स तालव्ययोगे तालव्यतां मूर्धन्ययोगे च मूर्धन्यतां लभते ।

भारतीयप्राचीनभाषाणां प्राचीनलिपीनां चानुकरणेन कासुचिद् भाषासु त्रयाणामपि श-ष-सा-नां लिख्यमानत्वेऽपि तदर्थमुच्चारणोद्यमेषु च क्रियमाणेष्वपि प्राकृतादिमध्ययुगभाषासु ओडिआ-आदिवर्तमानयुग-भाषासु च वस्तुत एकस्य द्वयोर्वोच्चारणं भवति । इङ्गिलशलिपिमालायां श-ष-सा-र्थमेकैव 's' इति लिपिर्वर्तते ।

आधुनिके भाषाविज्ञाने स-ध्वनिरिति शब्देनैषां त्रयाणामभिधानं भवति । वस्तुतः श-ष-सा एकस्यैव वर्णस्य तालव्य-मूर्धन्य-दन्त्य-रूपाणि ।

---

७४. पा. टी. ५।१०

एषां मिथ: परिवर्तनमपि दृश्यते। यथा—वेश: : वेष: ; वशिष्ठः > वसिष्ठः; तुरासाट् ( असि. ) > तुराषाट् । श-ष-सा-नां मध्ये कस्यापि स-ध्वनेः परिवर्तनयोग्यो वर्णः इतर - स-ध्वनिद्वयस्थानेऽपि दृश्यते। यथा—षट् > छश्र (ग्रो.) सप्तपर्ण > छत्तिवण्ण (म. प्रा.)।

स्तर: — १०

अत्र स्तरे केवलं ह एवावस्थापित:। पाणिनीयशिक्षायामयं स्पृष्टभावेन निरूपितः। बहवस्त्वेनमूष्मवर्णं कथयन्ति। तेनायमर्धस्पृष्टः। अतोऽर्धस्पृष्ट-स्पृष्टक्षेत्रान्तरालेऽस्य निवेश इत्युक्तम् ।

क्रमावस्थितेभ्य: कण्ठतालुमूर्धदन्तस्थानेभ्यो भारतीयभाषासु ह-श-ष-सा उच्चार्यन्ते । तस्माच्छौनक इदं वर्णचतुष्टयमनेनैव क्रमेण ऋक्प्रातिशाख्यवर्णमालायां विन्यस्तवान्। अन्यासु वर्णमालासु स्वस्वोद्देश्य-सिद्धये क्रमोऽयं परिहृत:।

भारतीयवर्णमालासु ओष्ठ्योष्मा नास्ति। इङ्गलिशवर्णमालायां तु विद्यते । स च F इति वर्णो य ओष्ठ्यसंघर्षी ( labial fricative ) इत्याख्यायते । अयमर्धस्पृष्टवर्णभावेन स्वीकारमर्हति। परन्तु माहेश्वर-वर्णमालायामस्य निवेशाभावाद्वर्णचित्रेऽयमुपेक्षित: । इत्थमाहत्य पञ्चोच्चारणस्थानजन्या: पञ्च अर्धस्पृष्टवर्णा भवन्ति।

स्तराः — ११-२०

एषु स्तरेषु स्पर्शानां पञ्च वर्गाः सन्ति। प्रतिवर्गार्थं द्वौ द्वौ स्तरौ कल्पितौ। तत्र प्रथमे विषमवर्णस्तरा अल्पप्राणस्तरा वा भवन्ति, द्वितीयाश्च सम्पृक्ताः समवर्णस्तरा महाप्राणस्तरा वा भवन्ति। यथा— एकादशस्तरे क-ग ङा द्वादशस्तरे च ख-घौ। संम्पृक्तश्वासनादानाम्, (यथा—क-ग) अननुनासिकानुनासिकानाम् ( यथा— ग-ङ ) अल्पप्राणमहाप्राणानां (यथा—क-ख)सामञ्जस्यप्रदर्शनार्थमयं विन्यासक्रम उद्भावित:। किं च सर्वे वर्गा ऊर्ध्वाधःक्रमेण स्थापिताः रेखासंयुक्तयोः कयोश्चिद्वर्णयो: सामञ्जस्यं सूचयन्ति (यथा—क-च)।

कचटतप इति वर्गाणां क्रमो बहुषु वर्णमालासु विद्यते।

स चोच्चारणस्थानानां मुखेऽवस्थानक्रम.। परन्तु अत्र स्वतन्त्रोद्देश्यसाधनार्थं किञ्चित्परिवर्तनं कृतम् । तच्च टवर्ग-तवर्गयोः स्थानविपर्यासः । चवर्गानन्तरं परम्पराप्राप्तं टवर्गं परित्यज्य तत्स्थाने तवर्गस्तदनन्तरं च टवर्गः स्थापितः। अनेन तवर्गस्य एकस्यां दिशि चवर्गेण, अन्यस्यां दिशि च टवर्गेण परस्पर-विनिमयसूचकः सम्बन्धः सुस्थापो भवति । उदाहरणम्— सत्+चिन्ता > सच्चिन्ता, सत् + टीका > सट्टीका । इत्थं चतुर्ष्वपि क्षेत्रेषु दन्त्यमूर्धन्यानां सन्निवेशे व्यतिक्रम एव जातः।

सर्वान् स्तरानेकीकृत्य दक्षिणतो वामं यावत् पाठे सर्ववर्गाणां पञ्चमचतुर्थतृतीयद्वितीयप्रथमेति माहेश्वरवर्णमा-लागृहीत: प्रतिलोमक्रमः संपद्यते । प्रतिस्तरयुग्ममेकीकृत्य वामतो दक्षिणं यावत्पाठे तत्तद्वर्गस्य प्रथमद्वितीयतृतीयचतुर्थपञ्चमेति तन्त्रगृहीतः अनुलोमक्रमः समायाति ।

## ६२. ऋ ऌ-वर्णयोर्वैचित्र्यम्

शंसितेषु स्तरेषु पञ्चमस्तरो विशेषभावेनोल्लेखमर्हति । तत्र स्थितयोः ऋ-ऌ-वर्णयोर्बहुधा वैचित्र्यं लक्ष्यते । एतद्विषये लौकिकोद्धरणस्य आप्तोक्तीनां चोद्धारावसरे ऋकारार्थं यावती सामग्री उपलभ्यते, न तावती ऌकारार्थम्; ऌ-व्यवहारस्य लोके विरलत्वान्नष्टप्रायत्वाच्च । रूपगोस्वामिकृत-श्रीगोविन्दविरुदावल्यामेकस्मिन् दण्डके श्रीकृष्णविरुदवर्णने प्रयुक्तया श्लेषोपमया[७५] इदं समर्थितम् । अ-तः क्ष-पर्यन्तं सकलवर्णान् विरुदाना-माद्याक्षररूपेण व्यवहृत्य अ-क्ष-मयीं मालां श्रीकृष्णाय समर्पणावसरे ऌ-ॡ-प्रसङ्गे तेन गीतम्— 'ऌदिव कृपेक्षित ॡवदलक्षित' इति । अत्र श्रीकृष्णः ऌ-ॡ-भ्यां तुलितः । ऌ-पक्षे कृप+ईक्षित इति सन्धिविच्छेदः । तस्मात् ऌवर्णः कृप्>क्लृप्त इत्यत्र दृश्यते, नान्यत्र; ॡवर्णस्तु कुत्रापि प्रयोगे न लक्ष्यते—इत्यर्थ आयाति ।

एवं सति ऋविषये विचाराः प्रचुराः, ऌविषये स्वल्पा इति

---

७५. (पृ. २१)

स्वाभाविकमेतत् । तथापि ऋ-लृ इत्येतयोः सादृश्यात् ऋ-विषयकाः सर्वेऽपि विचारा लृविषये प्रयोक्तव्याः ।

ऋ इत्येको वर्ण इति, लृ इत्यप्येको वर्ण इति सर्वैः स्वीक्रियते; परन्तु ते कमपि स्वरवर्णं र-व्यञ्जनेन सह सम्मेल्य ऋकारम्, ल-व्यञ्जनेन सह च सम्मेल्य लृकारमुच्चारयन्ति । इत्थमेतौ प्रत्येकं वर्णद्वयरूपौ ।

नैतावदेवासामञ्जस्यम्, अपि च ऋवर्णे कतमः स्वरः सम्मेल्य इति विषये प्राचीनकालादेव त्रयो मतभेदाः प्रवर्तन्ते, यदनुसारेण ऋकारस्योच्चारणं र इति, रि इति, रे इति वा भवति । यथा—

१. (क) ऋकारस्य र इति अकारविशिष्टमुच्चारणं कासुचिद्वैदिकशाखासु प्रयुज्यत इति लोमशोक्तेर्ज्ञायते[७६] ।

(ख) अहिर्बुध्न्यसंहिता अप्येतदाह । लृ इत्यस्य लरूपत्वकथनं तत्राधिकम्[७७] ।

(ग) उव्वटभाष्योक्तिरहिर्बुध्न्यसंहितया संवदति[७८] ।

(घ) संस्कृत-ऋ-लृ-स्थाने ग्रीक्भाषायां र-ल-इति अर्-अल् इति वा प्रयुज्यते[७९] । तृष : thars (ग.); ऋष्टि : अर्स्टिस् (जे.); दृढ : hart (ज.), hard; वृन्द>ब्रन्द[८०] (म प्रा.) —एषां तुलनाऽपि तथ्यमिदं समर्थयते ।

---

७६. रेफस्य च ऋकारस्य स्वरभक्तेस्तथैव च ।
अवर्णवत् प्रयोगः स्यात् (६।४)

७७. एकत्रिभागयोर्ऋध्या अरयोर्ऋ स्मृतो बुधैः ।
अलयोश्च तथा लृत्वम् (१६।५३)

७८. ऋकारे लृकारे च यथासंख्यं रेफलकारौ कण्ठ्याणुमात्रयोर्मध्येऽर्धमात्रिकौ संश्लिष्टौ एकीभूतौ अविद्यमानपृथक्श्रुतिधरौ एकश्रुतिभूतौ भवतः । —उ. भा. (४।१४६ सूत्रस्थम्)

७९. द्र. comparative philo'ogy (P. 113)

८०. द्र. वृन्दे वो रः —प्रा. प्र. (४।२७)

२. (क) बङ्गीया उदीच्याश्च अधुना स्वमातृभाषासु ऋ-लृ इत्येतौ रि-लि इति यदुच्चारयन्ति, न तदमूलकम्, शिवसूत्रविमर्शिन्यां हि ईदृशमुच्चारणं प्रतिपादितं जगदीशचन्द्रटिप्पण्यां च विश्लेषितम्। तत्र हि—वर्णाः खलु क्रमश उत्पन्नानां सृष्टितत्त्वानां सूचकाः-इत्यस्य प्रतिपादनवेलायाम् ऋ-लृ-वर्णौ र-ल-वर्णयोः इ-मेलनेन घटिताविति निरूप्य र-ल-वर्णौ यथाक्रमम् अग्निपृथिव्योर्बीजाक्षरे, इश्च इच्छाया आद्याक्षरम्; तेन अग्नेर्दीप्तत्वात् पृथिव्याश्च (केषाञ्चिन्मते) स्थिरत्वात् सृष्ट्यर्थं भगवत उद्दीप्तेच्छा स्थिरेच्छा च सूच्यत इति प्रकाशितम्[८१]।

(ख) संस्कृत-ऋ-लृ-स्थाने केल्टिक्भाषायां रि-लि-इति, बाल्टोस्लावोनिक् भाषायाम् ऋ-स्थाने इर् इति[८२], महाराष्ट्रीप्राकृते च क्लृप्त>किलित्त[८३] इत्यत्र लृ-स्थाने इलि इति प्रयुज्यते। वृक: vilkas (लि.), ऋणम्>इणं (पाली), सृज्: creat-इत्येषां तुलना इममर्थं समर्थयते।

३. (क) केचिच्च वैदिका ऋकारं रे इत्युच्चारयन्तीति केशवरामकृतपद्यात्मकशिक्षातोऽवगम्यते[८४]।

(ख) स्वीकृत(=आत्मीकृत>गुप्त): secret,तालवृन्तक>तालबेण्टअ[८५] (म. प्रा.) इति तुलनाऽस्यार्थस्य पुष्टिमादधाति।

---

८१. पा. टी. ५।१२

८२. द्र. Comparative Philology (P. 114)

८३. द्र. लृत इलिः — प्रा. प्र. (१।३४)

८४. ऋकारस्य च संयुक्तासंयुक्तस्यापि सर्वतः।
सैकारोच्चारणं कुर्यात् (११)

८५. द्र. तालवृन्ते ण्टः —प्रा. प्र. (३।४५)

४. (क) एतदुच्चारणत्रयवर्जम् ऋकारस्य रु इत्युच्चारणान्तरमप्यस्ति यत् खलु ओडिआ-मराठीप्रभृतिभाषासूपलभ्यते। लृकारोऽपि आसु भाषासु लु इत्युच्चार्यते।

(ख) ऋकारस्य इदमुच्चारणमपि न केवलमाधुनिकम्, पुरातनमपि; ऋक्प्रातिशाख्ये सङ्केतितत्वात्। वेदे नृभिरित्यत्र ह्रस्वऋकारस्य, मातॄः, पितॄन्, नॄन् इत्यादौ च दीर्घऋकारस्योच्चारणे यत् केचित् रम् ओष्ठ्यमुकारं च प्रयुञ्जते, तदुच्चारणं दुष्टत्वात्त्याज्यमिति तत्र प्रतिपादितम्[८६]।

(ग) अलुध्वेच्छाख्यस्य सृष्टितत्त्वस्य आद्याक्षरद्वयम्—अलु इति, यस्यार्थः खलु लुभिन्नस्तत्सदृशो वर्णः, ऋ इति यावत्। न लुः अलुरिति विग्रहात् नञश्च पर्युदासत्वेन तद्भिन्नत्वे सति तत्सदृशत्वमित्यर्थबोधनात् अयमर्थो भवति। लुध्वेच्छाख्यमन्यत्सृष्टितत्त्वम्, यस्य लु इति आद्याक्षरं लृवर्णं सङ्केतयति। एतत्प्रतिपादितं जगदीशचन्द्रेण[८७]। विवेचनमिदम् ऋ-लृ-वर्णयोः रु-लु-इत्युच्चारणं प्रकटयति।

(घ) संस्कृत-ऋ-लृ-स्थाने जर्मानीभाषायाम् उर्-उल् इति प्रयुज्यते। मृज् : mulgere (लै.), मृश् : mulceo (लै.), वृष्टि>वुट्ठि (पाली), मृत : mute, मृग : buck इति तुलनयाऽयमर्थो दृढीभवति।

(१, २, ३, ४)　इङ्लिश् l-वर्णोच्चारणवेलायां तद्वर्णस्यान्ते कोऽपि स्वरोऽवश्यमुच्चार्यते इत्यभिप्रायकं Danial Jones-निगदितं भारतीय-लृकारोच्चारणं सङ्केतयति[८८], यत्र ऋकारे यत्किञ्चित्स्वरपरको र इव लृकारे यत्किञ्चित्स्वरपरको ल उच्चार्यते।

---

८६.　स्वरौ कुर्वन्त्योष्ठ्यनिभौ सरेफौ
　　तिस्रो मातॄस्त्रीन् पितॄन् यन्नृभिर्नॄन्। —ऋ. प्रा. (१४।१२)

८७. पा. टी. ५।१२

८८. पा. टी. २।४६

५. (क) ऋ-लृवर्णयोरीदृशा उच्चारयितारोऽपि वर्तन्ते, येषामुच्चारणे र-ल-योः पूर्वपरभागयोः स्वरौ स्तः। यथा अभारोपीयायां तेलगुवर्णमालायां ऋ-लृ इत्येतौ अरु, अलु इत्युच्चार्येते, तथा भारोपीयभाषास्वपि। इदमुच्चारणं प्राचीनतरात् कालादुपलभ्यते। तथाहि तैत्तिरीयप्रातिशाख्यस्य त्रिभाष्यरत्नविवरणे ऋकारस्य स्वरूपमित्थमेव विवेचितमास्ते[८९]।

(ख) जेन्द्भाषायाम् परेथु ( : पृथु ), करेप (:कृप्) शब्दयोः रम् अभितः स्थितौ स्वरांशावपि इमं सिद्धान्तं द्रढयतः।

स्वरभक्तिरपि ऋकारस्येदं रूपं प्रकाशयति। स्वरभक्तिर्नाम स्वरस्य भागः। स्वरांश-र-स्वरांशघटितस्य ऋकारस्य समाने भागद्वये कृते प्रथमभागे प्रथमं स्वरांशः, ततो र-स्य अर्धांश आपतति, द्वितीयभागे च र-स्य शिष्टोऽर्धांशः, ततः स्वरांश आपतति। स्वरारब्धा स्वरभक्तिर्विवृता ऋस्वरूपा भवति, या सहस्रशीर्षा पुरुषः (ऋ. सं. १०।९०।१) इत्यादौ रात् परं श ष-से-षु मध्ये आपतन्ती शीर् (ऋ) षा इत्युच्चारणं प्रयोजयति। व्यञ्जनारब्धा स्वरभक्तिस्तु संवृता र-ह-योर्मध्ये आपतन्ती (र) रूपा भवति। यथा—एदं बर्हि-र्निषीदत (ऋ. सं. ६-५२।७) इत्यत्र बर्हिः इत्यस्योच्चारणं बर् (र) हिः इति भवति। विवेचनमिदं नारदीशिक्षायां वर्तते[९०]।

ऋकारस्य आद्यन्तयोः स्वरांशस्तिष्ठतीति पक्षस्यास्वीकारे इदं स्वरभक्तिद्वयं नैव सम्भवेत्। इत्थम् ऋकारस्य केवलं परभागे

---

८९. पा. टी. २।५४

९०. स्वरभक्तिर्द्वि (विधा त्वृ ?) धा प्रोक्ता ऋकारो रेफ एव च।
स्वरोदा व्यञ्जनोदा च विहिताऽक्षरचिन्तकैः॥
शषसेषु स्वरोदायां हकारे व्यञ्जनोदयाम्।
शषसे (षु विवृतां तु ?) ष्वेव विवृतो हकारे संवृतां विदुः॥ (२।६।८, ९)

स्वरोच्चारणपक्षे चत्वारो भेदाः पूर्वपरभागयोः स्वरावस्थितिपक्षेण मिलित्वा पञ्च भवन्ति ।

ऋकारस्य विविधांशानां ह्रासे विकासे च संस्कृते तदुत्थभाषासु च बहुरूपता प्रादुर्भवति । यथा—

i) पूर्वांशभूतस्य सूक्ष्मस्वरस्य अ-इ-उ-भावेन त्रिधा विकासे परांशस्वरस्य च ह्रासेन लोपे अर्, इर्, उर् इति वा भवति । यथा—सृ>सरणिः, गृहस्थ>गिरस्त(ओ.), कृ>कुर्यात् ।

ii) पूर्वांशस्य ह्रासे परांशस्य च विकासे र, रि, रु इति वा भवति । यथा—तृप्>त्रप्रा, मृ (ङ्)>म्रियते, वृक्ष>रुक्ख (म. प्रा.) ।

ऋ-ऌ इत्यनयोः स्थाने इतालिअन्भाषायाम् ओर् ओल् इत्येतौ प्रयुज्येते । तौ उर्, उल् इत्यनयोर्विकास इत्यवधेयम् ।

iii) मध्यांशस्य र-स्य लोपे अ, इ, उ इति वा भवति । यथा—मृत>मला (ओ.), घृत>घिअ (ओ.), वृद्ध>बूढा (हि.) ।

iv) ऋ-स्थाने यत्र र-सहिता र-रहिता वा आ-ई-ऊ इति दीर्घा दृश्यन्ते, तत्र विकासेनागतस्य ह्रस्वस्य पुनर्विकास इति कल्पनीयम् । केषुचित् स्थलेषु र-सहित-ररहितेषु भारतीयभाषागतेषु ए-ऐ-ओ-औ-षु पाश्चात्यभाषागतेषु आइ-एइ-ओइ आउ-एउ-ओउ इए-इओ - प्रभृतिष्वपि यथायथम् ऋकारांशह्रासविकासपुनर्विकासा ऊह्याः ।

अवेस्ताभाषायाम् ऋकारस्य अ̆र̆-अर̆-अ ( ərə-arə-a ) इति त्रिविधरूपग्रहणे या समस्या Taraporewala-कृतग्रन्थे प्रकाशिता,[६१] एतद्विवेचनेन तस्याः समाधानं भवति ।

---

६१. The treatment of the ऋ is peculiar in Av. It is generally represented by ərə, sometimes as arə. A very peculiar phonetic equation is ऋत=asa (अष).

—Elements of the Science of the Language (Sect. 17, P. 156)

६. अपरश्च कश्चित् षष्ठो भेदोऽपि कैश्चित् स्वीक्रियते, यदनुसारेण स्वरांशो नैव र-स्य पूर्वभागे, न वा परभागे उच्चार्यते; अपि तु युगपदेव र-स्वरौ उच्चार्येते ।

इमानि ऋकारस्य विविधस्थानसूचकानि मतानि सदृष्टान्तमुद्धृतानि Weber भद्रेण[९२] । तेन प्रदत्तोऽङ्गुलिनखन्यायो रात् परं स्वरस्य स्थितिं सूचयति । अङ्गुलेः परो हि नखस्तिष्ठति । मणिसूत्रन्यायस्तु र-स्वरयोरुच्चारणयौगपद्यं शंसति । यत्रैव मणिस्तत्रैव हि सूत्रम् । तृणकृमिन्यायस्तु रम् अभितः स्वरसत्तां प्रकाशयति । कृमयो हि तृणस्य पार्श्वद्वयं धृत्वा आच्छाद्य वा वर्तन्ते ।

मणिसूत्रन्यायो नात्र प्रयोज्य इति नो विचारः । यतो हि व्यञ्जनस्य र-स्योच्चारणं जिह्वाया ईषत्स्पर्शमपेक्षते, स्वरोच्चारणं च अस्पर्शमिति पाणिनीयशिक्षाया वचनात्[९३] कथं युगपदेव ईषत्स्पर्शास्पर्शौ सम्भवेतां येन र-स्वरयोः समकालोच्चारणेन सामानाधिकरण्यं स्यात् ?

अत्रायं प्रश्नः समुदेति यत्—स्वरान्तरेषु न कुत्रापि व्यञ्जनोच्चारणं भवति, यतस्तदुच्चारणे जिह्वा न कुत्राप्युच्चारणस्थानं स्पृशति । ऋवर्णे तु र-व्यञ्जनमुच्चार्यत एव । तत्कथमयं स्वरमध्ये गण्यते, जिह्वाया ईषत्स्पर्शेनोच्चारितोऽयं कथं वा पाणिनीयशिक्षायाम् अस्पृष्टत्वेन निरूप्यत इति ।

अत्रानुमिनुमः — कदाचित् ऋकार इतरस्वरवज्जिह्वाया अस्पर्शेनैवोदचार्यत, तत्र रोच्चारणं नासीत् । एवं सत्येव तस्य स्वरमध्ये गणनम् अस्पृष्टत्वेन च निरूपणं संगच्छेत । नूनं वर्णसाङ्कर्याभाव एवानयोः

---

९२. ऋवर्णे स्वरमात्रा या तस्या मध्येऽर्धमात्रया ।
रेफौ भवति संस्पृष्टौ यथाङ्गुल्या नखं तथा ॥
सूत्रे मणिरिवेत्येके तृणे कृमिरिवेति च ।
—Translation and Notes on अथर्वप्रातिशाख्य(१।३७स्थः)

९३. पा. टी. २।१०६

शुद्धस्वरतां प्रतिपाद्य अ-इ-उ-सविधे स्थानं प्रायोजयत् । नूनमिदमेव समानत्वं वीक्ष्य सिद्धान्तचन्द्रिकायाम् अ-इ-उ-ऋ-लृ इत्येषां समानसंज्ञा कृता[९४]। रोच्चारणे त्वसमानतैव स्यात् । तच्च शुद्धस्वरोच्चारणं साम्प्रतमनुपलभ्यमानमपि शास्त्रविवेचनदृष्ट्या विधातव्यम् ।

प्रथमतो मूर्धा[९५] जिह्वामूलं[९६] वर्स्वं[९७] वोच्चारणस्थानरूपेण कल्पनीयम् । जिह्वाग्रं[९७] जिह्वोपाग्रं[९८] वा करणत्वेनोपयोजनीयम् । अस्पृष्टप्रयत्नो मुखबिवरे विधातव्यो येन[९९] जिह्वा केवलमुच्चारणस्थानं प्रति उन्मुखीभवेत्, न तु स्पृशेत् । कण्ठविवरं सङ्कोचनीयं येन घोषध्वनिः सृष्टः स्यात् । लृवर्णोच्चारणार्थमप्येतत्सर्वं विधातव्यम्, केवलं तत्र दन्ताः[९९] वर्स्वं[९७] दन्तमूलं[१००] जिह्वामूलं[१०१] वोच्चारणस्थानरूपेण ग्रहीतव्यमिति विशेषः ।

नूनं प्राचीनकाले ऋकारलृकारयोरेतादृशं शुद्धमुच्चारणमासीत् । कालक्रमेण देशभेदेन वा कयाचिन्मात्रया र-लौ उदचार्येताम् । तदानीं तौ र-ल-रहितौ र-ल-सहितौ चेति द्विधा गृहीतौ । ऋकारयोर्दीर्घं विदधता

---

९४. अइउऋलृ समानाः (१।१)

९५. ऋटुरषाणां मूर्धा—सि. कौ. (१० सूत्रस्था)

९६. पा. टी. २।१०२

९७. (ओष्ठहनुनी) उपसंहृततरे च जिह्वाग्रमृकारल्कारेषु वर्स्वेषूपसंहरति ।
—तै. प्रा. (२।१८)

९८. जिह्वोपाग्रेण मूर्धन्यानाम्, जिह्वाग्राधः करणं वा ।
—आ. शि. (२।६,७)

९९. अष्टौ दन्त्या लृवर्णलकारसकारतवर्गा इति । —या. शि. (पृ. ३३)

१००. दन्तमूलेषु च लकारे —तै. प्रा. (२।४२)

१०१. ऋकारल्कारावथ षष्ठ ऊष्मा
जिह्वामूलीयाः प्रथमश्च वर्गः ॥ - ऋ. प्रा. (१।१९)

पाणिनिना[१०२] ऋकारः शुद्धस्वररूपेण विवेचितः, किन्तु कृप्-धातुगतस्य र-स्य लत्वं भवतीति ब्रुवता[१०३] तेनेव र-घटितत्वेन सूचितः। कात्यायनमतेऽपि स्वराद्वयो व्यञ्जनमिश्रितो ऋकार-लृकारो स्तो यो खलु तत्कृत-वार्तिकेन विहितो[१०४]। एतो द्विमात्रकावपि पाणिनिविहिताद्दीर्घाद्भिन्नो। अर्धमात्रकयोः स्वरांशयोर्मध्ये एकमात्रको र-लो तिष्ठन्तो इमो वर्णो घटयत इति भट्टोजीदीक्षितः[१०५]। त्रिभाष्यरत्नोक्ता एकमात्रकऋघटकाः स्वर-व्यञ्जनांशा[१०६] द्विगुणीभूय इमं द्विमात्रकं ऋकारं सम्पादयन्तीति परिशीलनाज् ज्ञायते। विशेषस्तु— कात्यायनोक्तो ऋ-लृ इत्येतो स्वरमध्ये न गण्येते, त्रिभाष्यरत्नोक्त ऋकारस्तु शुद्धस्वरो व्यञ्जनमिश्रितो वेति विषये न किञ्चित्कथितम्। द्विमात्रकाविमो ऋकारलृकारो स्वरत्वाभावात्ना-स्पृष्टप्रयत्नेन, अपि तु ईषत्स्पृष्टप्रयत्नेनोच्चार्येत इति नागेशस्य दर्शनम्[१०७]। 'नैरृत' इत्यादो रेफस्य ऊर्ध्वगमनम् ऋकारस्य अस्पृष्टत्वाभावं तेन व्यञ्जनत्वं च साधयति। नान्यत्र स्वरस्य मस्तकं रेफ आरोहति। र्अ र्इ र्उ इति हि न कदापि लिख्यते। र्क र्ख इत्यादो व्यञ्जनस्येव मूर्धनि रेफो निवेश्यते। इमो स्वतन्त्रप्रकृतिको वीक्ष्य शब्दकोस्तुभकारः अयोगवाहमध्येऽनयोर्गणनां कृतवान्[१०८]।

---

१०२. अकः सवर्णे दीर्घः —अष्टा. (६।१।१०१)

१०३. कृपो रो लः —तत्रैव (८।२।१८)

१०४. ऋति सवर्णे ऋ वा। लृति लृ वा —सि. को. (८५ सूत्रस्थवार्तिके)

१०५. आद्यस्य मध्ये द्वो रेफो तयोरेका मात्रा, अभितोऽज्भक्तेरपरा।
—सि. को. (८५ सूत्रस्था)

१०६. पा. टी. २।५४

१०७. उपस्थितरेफीयप्रयत्नत्यागे मानाभावादीषत्स्पृष्टाविमो।
—श. शे. (सन्धिप्रकरणम्)

१०८. ते च विसर्गजिह्वामूलीयोपध्मानीयनासिक्यानुस्वारयमा इति भाष्यम्। एतच्च 'ऋति ऋवा' (का. वा.) 'लृति लृवा' (का. वा.) इत्यनयोरप्युपलक्षणम्। —शब्दकोस्तुभः (पृ. ५३-५४)

अस्माद्विवेचनात् सिध्यति यत्, तदानीमुच्चार्यमाणयोः र-ल-घटितयोर्ऋ-लृ-वर्णयोः स्वरमध्ये गणनमन्याय्यमाकलय्य ईषत्स्पृष्टत्वं स्वरेतरत्वं च कात्यायनादयो मन्यन्ते। परन्तु कृपो रो लः (८।२।१८) इति पाणिनिसूत्रेण प्रतिपादितायाम् ऋवर्णे र-सत्तायां का गतिः? तादृशस्य ऋकारस्य स्वरत्वमस्पृष्टत्वं च कथं सेत्स्यति? नूनमेवमाशङ्क्य न केवलं कात्यायनविहितौ ऋ-लृ-वर्णौ, अपि तु सर्वेऽपि ऋ-लृ वर्णा नास्पृष्टा इति वर्णरत्नप्रदीपिकाशिक्षा कल्पयति[१०९]।

साम्प्रतम् ऋ-लृ-वर्णयोर्मात्रा र-ल-सत्ता चेति विषयद्वये शास्त्रीय-सिद्धान्तान् क्रमसज्जितान् विधाय उपस्थाप्यते—

(१) ह्रस्वौ ऋ-लृ-वर्णौ एकमात्रकौ, दीर्घौ द्विमात्रकौ, प्लुतौ च त्रिमात्रिकावित्यष्टाध्यायी[११०]। लृकारस्य दीर्घो नास्तीति सिद्धान्तकौमुदी[१११]। अस्तीति तान्त्रिकाः; तेन स्वराणां षोडशत्वं संगच्छते[११२]। तौ च शुद्धस्वरौ, न तु र-ल-मिश्रिताविति तयोरस्पृष्टप्रयत्नः कल्पितः पाणिनीय-शिक्षायाम्। अनयोरंशांशिकल्पना नास्ति।

(२) (क) तन्त्रसारे एतयोः र-ल-श्रुतिमात्रं कल्पितम्, न तु व्यञ्जनवत् स्थितिः[११३]। तस्मात्तत्र र-लयोः अष्टमांशमात्रा कल्पनीया, तदपेक्षया न्यूनतममात्रायाः शास्त्रेऽनुक्तत्वात्।

(ख) र-सदृशवर्णैकदेशस्थाने ल-सदृशवर्णैकदेशो भवतीति व्याचक्षाणः पतञ्जलिरपि र-श्रुतिं सङ्केतितवान्[११४]।

---

१०९. ऋलोर्मध्ये भवत्यर्धमात्रा रेफलकारयोः।
तस्मादस्पृष्टता न स्यात्सम्यक् ऋलृकारयोः॥ (४२)

११०. ऊकालोऽज्झ्रस्वदीर्घप्लुतः (१।२।२७)

१११. लृवर्णस्य द्वादश, तस्य दीर्घाभावात् (९ सूत्रस्था)

११२. स्वरास्तु षोडशप्रोक्ताः —प्र. सा. त. (३।२)

११३. अतः अस्फुटत्वादेव श्रुतिमात्रं र-लयोः, न तु व्यञ्जनवत् स्थितिः।
—त. सा. (आ. ३, पृ. १२)

११४. द्र. म. भा. (८।२।१८ सूत्रस्थम्)

(ग) अ-इ-उ-ऋ-लृ इति स्वरपञ्चके समानेऽपि अ-इ-उ-तो विच्छिद्य ऋलृ(क्) इति माहेश्वरसूत्रे ऋलृवर्णयोः पृथक् स्थापनं नूनं तयोः र-ल-श्रुतिहेतुकमित्युत्पश्यामः। यदि ऋ-लृ-वर्णयोः पूर्णतया र-ल-सत्ताऽनुभूता ऽभविष्यत्तदा एओ(ङ्) ऐऔ(च्) इति सन्ध्यक्षरसूत्राधारात् माहेश्वरसूत्र-द्वयात् परमेव ऋ-लृ (क्) इत्यस्य स्थापनं व्यधास्यत। अन्प्रत्याहारे ऋ-लृ-ग्रहणम् अ-इ-उ-भ्यः परम् ऋ-लृ-स्थापनस्य प्रयोजनान्तरमिति त्वन्यत्।

३. (क) ऋकारे न केवलं र श्रुतिः, अपि तु र-स्य सम्यगुच्चारणमिति पक्षोऽपि दृश्यते। अथर्वप्रातिशाख्यमस्य मतस्य पोषकम्[११५]।

(ख) ऋकारे यथा रः, लृकारे तथा लः सम्यगुच्चार्यत इत्यपि केचित्। ऋक्प्रातिशाख्यं[११६] शुक्लयजुः प्रातिशाख्यं[११७] प्रपञ्चसार-तन्त्रं[११८] (प्र. सा. त.) चात्र प्रमाणम्।

मात्रांशकल्पनायां त्विमे भेदाः प्रकाशन्ते—

१. अ $\frac{१}{४}$ + र $\frac{१}{२}$ + अ $\frac{१}{४}$ = ऋ१ अ $\frac{१}{४}$ + ल् $\frac{१}{२}$ + अ $\frac{१}{४}$ = लृ१ इति [७८]

२. अ $\frac{१}{४}$ + र् $\frac{३}{४}$ = ऋ१ अ $\frac{१}{४}$ + ल् $\frac{३}{४}$ = लृ१ इति [७७]

३. अ $\frac{१}{२}$ + र्१ + अ $\frac{१}{२}$ = ऋ२ (स्वरेतरः) अ $\frac{१}{२}$ + ल्१ + अ $\frac{१}{२}$ = लृ२ (स्वरेतरः) इति [१०५]

४. ऋ२ $\frac{१}{२}$ लृ२ $\frac{१}{२}$ इति [११९]

११५. संस्पृष्टं रेफमृवर्णम् (१।३७)

११६. रेफोऽस्त्यकारे च परस्य चार्धे
पूर्वे च ह्रस्वीयांस्तु च वेतरेषाम्।
मध्ये स तस्यैव लकारभावे
यातो स्वरः कल्पयता लृकारः॥ ऋ. प्रा. (१३।१४)

११७. ऋ-लृ-वर्णौ रेफलकारौ संश्लिष्टावश्रुतिधरावेकवर्णौ (४।१४६)

११८. लृवर्णवर्णयोर्व्यक्तिर्लरोः सम्यक् प्रदृश्यते। (३।६४)

११९. इदं तत्रोद्धृत मतान्तरम् (६।१।१०१ सूत्रगतभाष्यस्थः)

लृकारप्रयोगस्योदाहरणमेकम् ऋकारस्य त्वनेकमित्युक्तम् । तस्मात् स्पष्टप्रतिपत्तये ऋकारस्यैव अंश-मात्रा-प्रमाणप्रदर्शकं कोष्ठकमत्र प्रदीयते । प्रमाणे अंशस्य मात्राया वा अप्रतिपादने सति तत्स्थानं रिक्तमेव परित्यज्यते । श्रुतेः अंशमात्रा सर्वोना भवति । तस्मात्तादृशस्थले $\frac{१}{८}$ मात्रा कल्पिता । अथर्वप्रातिशाख्ये हि स्वरभक्तेर्वैकल्पिकभावेन स मात्रांशः कल्पितः । तदपेक्षया न्यूनस्य मात्रांशस्य क्वचित् कल्पना नास्ति ।

# कोष्ठकम्–४

## ऋवर्णस्य अंश-मात्रा-प्रमाणानि

| क्रम-संख्या | अंशः | मात्रा | प्रमाणानि | प्रमाणानां पादटीकासंख्या |
|---|---|---|---|---|
| १ | (शुद्धस्वरे ऋकारे अंश-कल्पना नास्ति | ह्रस्वः – १<br>दीर्घः – २<br>प्लुतः – ३ | अष्टा. १।२।२७<br>पा. शि. ३८<br>सि. च. १।१ | ५।११०<br>२।१०६<br>५।९४ |
| २ | (कात्यायन-विहिते ऋकारे) | $२\frac{१}{२}$ | प्रदीपः ६।१।१०१ स्थ: | ५।११९ |
| ३ | र्, स्वरः | | शु. य. प्रा. ४।१४६ | ५।११७ |
| | ,, | | अ. प्रा. १।३७ | ५।११५ |
| | ,, | | अष्टा. ८।२।१८ | ५।१०३ |
| | ,, | | प्र.सा.त. ३।६४ | ५।११८ |
| ४ | ,, | $\frac{१}{२}+\frac{१}{२}=१$ | टिप्पणी, अ.प्रा. १।३७स्था | ५।९२ |
| ५ | ,, | $\frac{१}{८}+\frac{७}{८}=१$ | त.सा., आ. ३, पृ. १२ | ५।११३ |
| ६ | ,, | ,, | म. भा., ८।२।१ स्थम् | ५।११४ |

| | | | | |
|---|---|---|---|---|
| ७ | र् स्वरः (युगपत्) | $\frac{१}{२}+\frac{१}{२}=१$ | टिप्पणी, अ.प्रा. १।३७ स्था | ५।९२ |
| ८ | स्वरः, र् | २ | ना.शि.२।६।८,९ | ५।९० |
| ९ | ,, | | ऋ.प्रा. १३।१४ | ५।११६ |
| १० | स्वरः, र्, स्वरः | $\frac{१}{४}+\frac{१}{२}+\frac{१}{४}=१$ | त्रि. भा. र. १।१५ स्थम् | २।५४ |
| ११ | ,, (कात्यायन-विहित ऋकारे) | $\frac{१}{२}+१+\frac{१}{२}=२$ | सि. कौ. ८५ सूत्रस्था | ५।१०५ |
| १२ | र्, अ | | लो. शि. ६।४ | ५।७६ |
| १३ | अ, र् | $\frac{१}{४}+\frac{३}{४}=१$ | अ.बु.सं.१६।५३ | ५।७७ |
| १४ | अ, र्, अ | $\frac{१}{४}+\frac{१}{२}+\frac{१}{४}=१$ | उ. भा. ४।१४६स्थम् | ५।७८ |
| १५ | र्, इ | | शि. सू. वि. २।७स्था | ५।१२ |
| १६ | र्, उ | | ऋ. प्रा. | १४।१२ |
| | ,, | | जगदीशचन्द्र-टिप्पणी२।७स्था | ५।८७ |
| १७ | र्, ए | | केशवरामकृता पद्यात्मिका शिक्षा (११) | ५।८४ |

## ६३. विविधा रेखाः

वर्णचिह्ने प्रदत्ताः कल्पिता रेखाः प्रथमतस्त्रिविधाः —अंशसूचिकाः, विभाजिका, संयोजिकाश्च । अंशसूचिकाः पुनस्त्रिविधाः — प्रथमा द्विबिन्दु-मयी द्विबिन्दुलिपिकविसर्गांशसूचिका रेखा, या विसर्गाग्निष्क्रम्य ख-छ-थ-ठ-फेषु क्रमशः प्रविष्टा तेषु विसर्गांशस्थितिं द्योतयति । द्वितीया खण्डित-

रेखामयी हकारांशसूचिका रेखा, या हकारान्निष्क्रम्य क्रमशो घ-भ-ध-ढ-भान् प्रविष्टा सती तेषु हकारांशं सूचयति। विन्दुशीर्षकरेखाखण्डमयी अनुस्वारांशसूचिका, या अनुस्वारान्निर्गत्य ङ प्रविष्टा।

विभाजिका रेखा त्वेकैव, विन्दुमयी या चित्रे ऊर्ध्वादधोलम्बिता सती घोषाघोषान् परस्परतः पृथक्करोति।

संयोजिका रेखा खलु द्विविधा— आश्रयसूचिका, सामञ्जस्य-सूचिका चेति। आश्रयरेखासंयुक्त एको वर्ण आश्रयः अपरश्च आश्रितो भवति। तेन स्वरा आश्रयाः, विसर्गानुस्वारौ च तानाश्रित्यैवावतिष्ठेते इति भावः प्रकाशितो भवति। इयं रेखा एकविधा एव। सामञ्जस्यसूचिका तु त्रिविधा— सावर्ण्यसूचिका, सस्थानत्वसूचिका, अन्तरङ्गत्वसूचिका च। सावर्ण्यं स्थानप्रयत्नयोर्द्वयोरपि साम्यमपेक्षते, सस्थानत्वं च एकमेव स्थानमिति सावर्ण्यरेखा युग्मिका, सस्थानत्वरेखा चैकिका कृता। तत्तत्स्थानार्थं यार्द्धच्छेदभावेन तत्तदुच्चारणस्थानार्थं कल्पितैः रङ्गैः सावर्ण्यरेखा सस्थानत्वरेखा च रञ्जिता। सावर्ण्यरेखा त्रिविधा— तिरश्चीना, दीर्घसरला, क्षुद्रसरला च। तत्र तिरश्चीना अल्पप्राणमहाप्राणत्वसम्बन्धम्, दीर्घसरला घोषाघोषत्वसम्बन्धं क्षुद्रसरला च अनुनासिकाननुनासिकत्व-सम्बन्धं प्रकाशयति। यत्र रेखासंयुक्तयोः सस्थानयोर्द्विस्थानकत्वम्, तत्र तत्सूचनाय तत्तत्स्थानसूचिका युग्मरेखा कर्तव्याऽऽसीत्। परन्तु तथा सति सावर्ण्यभ्रमः स्यात्। अतस्तथा न कृत्वा रेखासंयुक्तयोर्वर्णयोः सन्निहित-रेखांशः प्रथमोच्चारणस्थानरङ्गेण द्वितीयांशश्च द्वितीयोच्चारणस्थानरङ्गेण रञ्जितः। यथा— ए-ऐरेखा, ओ-औरेखा वा। यत्र तु संस्थानयोरेकस्य द्विस्थानकत्वम्, अन्यस्य च एकस्थानकत्वम्, तत्र सस्थानत्वसूचकसाधारणं तद्रङ्गोचितां पूर्णरेखामुभयोर्मध्ये दत्त्वा द्विस्थानकसविधेऽन्या द्वितीयस्थानो-चितरङ्गरञ्जिताऽर्धरेखा दत्ता। इत्थम् अ-ए, अ-ओ, इ-ए, उ-ओ इत्येत-च्चतुष्टयस्य मध्ये चतस्रः सार्धैकरेखाः प्रदत्ताः। अन्तरङ्गत्वसूचिका रेखा स्थूला कृता। इतराः सर्वास्तु कृशाः। स्पष्टीकरणाय विवरणचित्रमत्र प्रदीयते—

# विवरणचित्रम्-३

## रेखाणां सूचना



## ६४. अंशमिश्रणकल्पनाया औचित्यम

विसर्गस्य ह-स्य चानुस्यूतिकल्पनाया हेतुस्तावत्—

(i) विसर्गमिश्रणेन क-च-ट-त-पाः ख-छ-ठ-थ-फा भवन्तीति शौनकेन प्रतिपादितम्[१२०]।

(ii) भोलाशङ्करव्यासोऽपि एतदेव समर्थयते[१२१]

(iii) तैत्तिरीयप्रातिशाख्यं ह-घ-झ-ढ-ध-भानां 'हकार' इत्याख्यं पृथक्-प्रयत्नं शंसति[१२२]।

(iv) शौनकोक्तं केचिदन्यथा व्याचक्षते। यथा उच्चजर्मन्यां p(|), Ts, Kx इति महाप्राणोच्चारणं भवति, तथा पुरा संस्कृतेऽपि कदाचित् स्थानविशेषेषु महाप्राणस्पर्शवर्णानां प्फ्, त्थ्, क्ख् इत्यादिरूपेणोच्चारणमभूदिति ऋक्प्रातिशाख्यस्याभिप्राय इति ते मन्यन्ते। इदं प्रकाश्य W. S. Allen औत्तरकालिको महाप्राणोच्चारणविकासो नेदं समर्थयत इति तत् खण्डितवान्[१२३]। एतेन विसर्ग-ह-योरेव

१२०. पा. टी. २।१३

१२१. महाप्राणध्वनियों में अघोष महाप्राणध्वनि होती है, सघोष महाप्राण ध्वनियों में सघोष महाप्राणध्वनि। यथा—ख=क्+ह, छ=च्+ह, घ=ग्+ह, झ=ज्+ह—संस्कृतका भाषाशास्त्रीय अध्ययन (पृ. ८९)

१२२ हकारो हचतुर्थेषु (२।९)

१२३. Some say that the aspiration of the aspirates consists of a homorganic fricative........dialectal pronunciations of this type are likely to have existed in the case of Sanskrit. The later development of the aspirates, however, hardly supports uvat's assumption of a strongly affricated pronunciation (P(|), Ts, Kx) such as is attested in, for example, High Germanic— Phonetics in Ancient India (part I, Sect. 1.121, PP 138-139)

महाप्राणवर्णेषु यथायथमनुस्यूतिपक्षः साधितो भवति ।

(v) स्पर्शमहाप्राणवर्णाः kh, gh प्रभृतिरूपेण h-मिश्रणेन इङ्गिलश्-लिप्या प्रकाश्यन्ते । इदमपि तत्तद्वर्णेष्वंशमिश्रणस्य सूचकम् । इङ्गिलशलिपिमालायां विसर्गाभावात् h इत्येकमेव विसर्गस्य ह-स्य च प्रातिनिध्यं सम्पादयति । परन्तु अघोषेषु खछठथफेषु अघोषस्य विसर्गस्य, घ षेषु घझढधभेषु च घोषस्य ह-स्य स्थितिकल्पनं न्याय्यम् ।

ङकारेऽनुस्वारानुस्यूतिकल्पनायां हेतुस्तावत्—

(i) ङ-लिपेरन्त्यांशो बिन्दुः । बिन्दुश्चानुस्वारस्य रूपं नाम च ।

(ii) हवींषि (वै.) इत्यत्र अनुस्वारस्थाने ङकारो भवतीति पशुपति-व्याख्या[१२४] ।

(iii) महाराष्ट्रीप्राकृते ङः क्वचिदनुस्वारो भवति । यथा— पङ्क्तिः> पंती[१२५] ।

(iv) उत्कल- बालेश्वरमण्डलीयः मांसप्रभृतिशब्दानुच्चारयन् माङ्स इत्यादि करोति ।

(v) यथा म-स्थानेऽनुस्वारो भवति, तथा वेदे क्वचित् ङो भवतीति सिद्धान्तशिक्षा । यथा— त्वम् (वै.)>त्वङ् (वै.)[१२६] ।

(vi) नासिका अनुस्वारस्येव ङ-स्याप्युच्चारणस्थानं भवति[१२७] ।

---

१२४. केचिदनुस्वारस्य स्थाने तावत् ङकारं जनयन्ति – पशुपतिव्याख्या (ऋ. प्रा. १३।७ स्था)

१२५. द्र. नङोर्हलि— प्रा. प्र. (४।१४)

१२६. त्वमित्यस्य वा ङकारान्तादेशश्छान्दस इति अस्यार्थः । (सिद्धान्तशिक्षा Critical Studies in the Phonetic Observations of Indian Grammarians, ग्रन्थस्य १५२ पृष्ठे पादटीकायां धृता ।

१२७. अमङणनानां नासिका च । नासिकाऽनुस्वारस्य । —सि. कौ. (१० सूत्रस्था)

(vii) मुखनासिकाविवरकेन्द्रेऽवस्थिताऽधिजिह्वा यदि मुखविवरं पूर्णतया निरुध्य नासिकाविवरमुन्मुक्तं करोति, तदा वायुप्रवाहो नासिकाविवरेण निर्गच्छन्ननुस्वारोच्चारणे निमित्तीभवति; यदा तु युगपन्नासिकामुखविवराभ्यामुन्मुक्ताभ्यां वायुर्विसृज्यते, मुखविवरे च पश्चाज्जिह्वा उत्थिता श्लक्ष्णतालुना च मिलिता सती मुखविवरेण वायुनिर्गमं क्षणं प्रतिबध्नाति, तदा ङो भवतीति उच्चारणप्रक्रियायां ङानुस्वारयोः साम्यमस्ति।

(viii) मुखादुच्चार्यमाणो गकारः नासिकायाश्चोच्चार्यमाणोऽनुस्वार इत्येतौ नीरक्षीरन्यायेन मिलितौ संपिण्डितौ च भूत्वा ङकारोच्चारणं प्रयोजयतः। कस्यचिद्वर्गतृतीयवर्णस्य स्ववर्ग्यपञ्चमवर्णेन सह केवलमानुनासिक्यं विहाय पार्थक्यं नास्तीति आपिशलशिक्षामतं च[१२८] प्रस्तुतवस्तुपरिपोषकम्।

एवं विसर्ग-हा-नुस्वाराणामंशाः केषुचिद्वर्णेषु वर्तन्त इति सिद्धम्।

अत्रत्यमंशमिश्रणं नीरक्षीरन्यायेन भवति, न तु तिलतण्डुलन्यायेन। मिश्रितास्तिलतण्डुलाः पृथक्कर्तुं शक्यन्ते, नीरं तु क्षीरतः पृथक्कर्तुं न शक्यते। अतएव "strong-शब्दे n-g इत्यनयोरुच्चारणं न भवति, परन्तु उभयधर्ममिश्रणोत्थमेकमेव स्वतन्त्रमुच्चारणं भवति[१२९]।

---

१२८. ये ये तृतीयास्ते ते पञ्चमा आनुनासिक्यमेषामधिको गुणः। (४।७)

१२९. The final consonantal groups have also been simplified in ong, for instance, strong, where now only one consonant is heard after the vowel, a consonant partaking of the nature of n and g, but identical with neither of them.

—Growth and Structure of the English Language (Sect. 5, Chap. I, P. 4)

इति Jespersen वदति। इदं खलु अनुस्वार-ग-मिश्रणे प्रादुर्भूतस्य ङ-स्योच्चारणम्। यत्तु ख-घा-दीनां kh-gh-प्रभृतिरूपेण लेखे तिलतण्डुल-मिश्रणरीतिराख्यायते, तत्र लिपिदारिद्र्यमेव हेतुः, न तु तद्वास्तविकम्। भारतीयलिपयस्तु वास्तवं सम्पिण्डितं मिश्रणं प्रकाशयितुं क्षमन्ते।

## ६५. रेखागतरङ्गाः

सामञ्जस्यसूचकरेखावर्जमन्यत्र साधारणमुद्रणोपयोगिन्यः कृष्णरङ्गस्य कृशा रेखाः कल्पिताः। सामञ्जस्यसूचिकास्तास्ता रेखास्तु कल्पितैस्तत्तद्रङ्गै रञ्जिताः। इदं रङ्गवैविध्यं रेखासंयुक्तानां वर्णानां पृथक् पृथक् तत्त्वानि प्रकाशयन्ति। रेखा-रङ्ग-तत्त्ववैविध्यप्रकटनार्थमत्र कोष्ठकमेकं प्रदीयते।

## कोष्ठकम्—५

### रेखागतरङ्गतत्त्वसूची

| रङ्गः | रेखा | तत्त्वम् |
|---|---|---|
| कृष्णः | एकबिन्दुमयी | घोषाघोषविभाजनम् |
| ,, | द्विबिन्दुमयी | विसर्गांशानुस्यूतिः |
| ,, | बिन्दुशीर्षकरेखामयी | अनुस्वारांशानुस्यूतिः |
| ,, | खण्डमयी | हकारांशानुस्यूतिः |
| ,, | एकिका (स्थूला) | अन्तरङ्गत्वम् |
| ,, | ,, (कृशा) | आश्रयः |
| पीतः | ,, | नासिक्यसस्थानत्वम् |

| रङ्गः | रेखा | तत्त्वम् |
|---|---|---|
| हरित-नील-हरितः (खण्डत्रये) | एकिका | कण्ठतालव्यसस्थानत्वम् |
| हरितारुण-हरितः „ | ,, | कण्ठोष्ठ्यसस्थानत्वम् |
| हरितः १ + नीलः $\frac{1}{2}$ | सार्धैकिका (अर्धे एकिका, अर्धे च युग्मिका) | एकिका कण्ठ्या, अर्धा च तालव्येति अर्धसस्थानत्वम् |
| हरितः १ + अरुणः $\frac{1}{2}$ | ,, | एकिका कण्ठ्या, अर्धा च ओष्ठ्येति अर्धसस्थानत्वम् |
| हरितः | एकिका | कण्ठ्यसस्थानत्वम् |
| ,, | युग्मिका | कण्ठ्यसावर्ण्यम् |
| नीलः | एकिका | तालव्यसस्थानत्वम् |
| ,, | युग्मिका | तालव्यसावर्ण्यम् |
| गाढनीलः | एकिका | दन्त्यसस्थानत्वम् |
| ,, | युग्मिका | दन्त्यसावर्ण्यम् |
| रक्तः | एकिका | मूर्धन्यसस्थानत्वम् |
| ,, | युग्मिका | मूर्धन्यसावर्ण्यम् |
| अरुणः | एकिका | ओष्ठ्यसस्थानत्वम् |
| , | युग्मिका | ओष्ठ्यसावर्ण्यम् |

वर्ग्यपञ्चमवर्णा नासिकया मुखगतेन च केनचित् स्थानेनोच्चारिता भवन्ति। वर्ग्यतृतीयवर्णाश्च मुखगतेन एकेनैव स्थानेनेति अ-ए इत्यादाविव सार्धैकिका रेखा संयोजकत्वेन प्रदातव्या आसीत्। किन्तु यथा ए-ओ-प्रभृतौ प्रथमतः कण्ठ्यांश:, परस्ताच्च इतरस्थानोच्चारितांशो वर्तते, नात्र तथा। अत्र तु युगपदेव नासिकया केनचिदुच्चारणस्थानेन चोच्चारणं संपद्यते। अतएव उच्चारणस्थानयोः पौर्वापर्याभावात् न तथा कृतम्। सावर्ण्यभ्रमनिवारणार्थं च ङ-ञ, ञ-न, न-ण इत्यत्र युग्मकरेखा न दत्ता।

## ६६. वर्णानां यथोचितः क्रम आपेक्षिकसम्बन्धश्च

चित्रमन्तरा वर्णानां यथोचितक्रमप्रदर्शनम् आपेक्षिकसम्बन्ध-निरूपणं च नैव सुकरम्। यथा—

(१) अइउ (ण्) इतिमाहेश्वरक्रमे, अआइईउऊ इति तान्त्रिकक्रमे च केन्द्रस्वरेण अकारेण अनन्तरावस्थितस्य अग्रस्वरस्य इकारस्य यथा सामीप्यं प्रकाशते, न तथा इकारव्यवहितस्य पश्चात्स्वरस्य उकारस्य। वस्तुतस्तु जिह्वाकेन्द्रादग्रजिह्वा एकस्यां दिशि यावति दूरे वर्तते, पश्चाज्जिह्वाऽपि अपरस्यां दिशि तावत्येव दूरे वर्तते इति यथाक्रमम् अग्रजिह्वापश्चाज्जिह्वोच्चारितौ इकारोकारौ केन्द्रजिह्वोच्चारितस्य अकारस्य समानदूर एव संस्थाप्यौ। वर्णचित्रे तु इ अ उ इत्याकारविन्यासे तदसामञ्जस्यं दूरीभवति।

(२) (क) माहेश्वरक्रमे (i) झभ (ञ्), घढध (ष्), जबगडद(श्) इत्यत्र (ii) खफछठथचटत(व्), कप(य्) इत्यत्र च कस्यचिद्वर्ग्यमहाप्राणस्य सम्पृक्तेन वर्ग्याल्पप्राणेन सामीप्यं नैव प्रतिपाद्यते।

(ख) तान्त्रिकक्रमे कखगघङ इत्यादौ तादृशसामीप्यप्रकाशेऽपि कस्यापि वर्ग्यघोषवर्णस्य संपृक्तेन वर्ग्याघोषवर्णेन सह यथोचितं सामञ्जस्यं नैव प्रदर्शितं भवति, अनुचितवर्णव्यवधानं च दृष्टिगोचरं भवति।

क = ग = ङ इति चित्रीयवर्णविन्यासे तु एतदुभयविधदोषो
ख = घ

निराकृतो भवति। तत्र हि –

(i) अल्पप्राणत्वात् समस्तराणां क-ग-ङा-नां मध्ये एकविधः, महाप्राणत्वात् समस्तरयोः ख-घ-योश्च मध्येऽन्यविधो निकट-सम्पर्कः सूच्यते।

(ii) क ग-योरल्पप्राणत्वात् ख-घ-योश्च महाप्राणत्वात् स्तरसाम्याभावेऽपि अघोषयोः क-ख-योर्मध्ये घोषयोर्ग-घ-योश्च मध्ये वर्तमानयोरन्यविधनिकटसम्पर्कयोः पार्थक्यं - प्रथमे सरलरेखया द्वितीये च तिर्यग्रेखया वर्णचित्रे प्रकाश्यते।

३. क-ग-ङानां समस्तरकत्वेऽपि ग-ङयोर्मध्ये सम्पर्कम्, ग-स्यानुनासिकत्वं ङ-स्य च नासिक्यत्वमिति भेदं च दर्शयितुं चित्रे क-ग-रेखापेक्षया ग-ङ-रेखा ह्रस्वा कृता। न कुत्रापि वर्णक्रमे तयोः सामञ्जस्यं प्रकाशते, सामीप्याभावात्।

(४) तान्त्रिकवर्णक्रमे ख-स्य अघोषमहाप्राणत्वात् ग-स्य च घोषाल्पप्राणत्वात् पारस्परिकसम्पर्के या दूरता वर्तते, ख-ग इति निकटसन्निवेशात् सा दूरता नैव प्रकाशिता भवति।

(५) ङः कण्ठ्यः-चस्तालव्यः; ङः घोषः— चः अघोषः; ङः अनुनासिकः —चः अननुनासिकः —इति ङ-च-योर्मध्ये वतमाना सम्पर्कदूरता ङ-च इतिक्रमे न प्रकाशते वर्णचित्रे तु रेखासयोगाभावः पार्थक्यमिदं प्रकाशयति, सम्बन्धभ्रमं च निराकरोति।

अनयैव रीत्या इतरवर्णानां वर्णान्तरैः सम्पर्कासम्पर्कविषये वर्णचित्रक्रमः इतरवर्णक्रमैः सह तुलनायः।

## ६६ गाणितिकरीत्या वर्णतत्त्वनिरूपणम्

स्वरयन्त्रस्य सङ्कोचप्रसारौ, अविजिह्वाया विविधस्थितम्, क्वचिज्जिह्वाया विविधभागस्य स्पर्शास्पर्शौ, क्वचिद्वा ओष्ठस्य स्पर्शास्पर्शौ भित्तीकृत्य चित्रे वर्णानामापेक्षिकदूरेषु स्थितिः कल्पिता।

विविधस्वरार्धस्वरोच्चारणार्थं मुख्यतो जिह्वायास्त्रयो भागा उपयुज्यन्ते—केन्द्रभागोऽग्रभागः पश्चाद्भागश्चेति । तदनुसारेण स्वरा अपि केन्द्रस्वरा-अग्रस्वर-पश्चात्स्वररूपेणाख्यायन्ते । एषामापेक्षिकसम्बन्धप्रदर्शनाय वर्णसञ्ज्ञाचित्रे वक्ष्यमाणा दूरत्वयोजना विहिता—

१. (क) अ अ अ अ
∧ ∧
इ उ — ए ओ — ऐ औ — य व —

इत्याकारेण सन्निवेशः समद्विबाहुत्रिभुजचतुष्टयं सृजति । वामबाहुषु अग्रस्वरार्धस्वरा इ-ए-ऐ-याः चतुर्षु पृथक्स्तरेषु केन्द्रस्वरात् अकारात् यावति आनुभूमिके ( horizontal ) यावति च दैर्घ्यात्मके (vertical) दूरत्वे वर्तन्ते, दक्षिणबाहौ पश्चात्स्वरार्धस्वरा उ-ओ-औ-वाः तावति समान्तराले दूरत्वे वर्तन्ते ।

(ख) इ-य-रेखा अ-इ-रेखया सह, उ-व-रेखा च अ-उ-रेखया सह

अ
इ उ इति सर्वतोभावेन समानं विषमबाहुत्रिभुजद्वयं सृजतः ।
य व

अनेन केन्द्रस्वरं केन्द्रीकृत्य परस्परविपरीतदिशोः चतुर्षु स्तरेषु अवस्थिताः समान-गुण वृद्धि सङ्कोचनाख्याश्चत्वारोऽग्रस्वरार्धस्वराश्चत्वारश्च पश्चात्स्वरार्धस्वरा व्यष्टिरूपेण समष्टिरूपेण च अ-गामि-कल्पितोर्ध्वाधोरेखां केन्द्रीकृत्य समान्तरालत्वात् बिम्बप्रतिबिम्बभावं वहन्तो दर्पणप्रतिसमतां ( mirror symmetry ) धारयन्ति, केन्द्राग्रपश्चात्स्वरोचितां स्थितिं चावलम्बन्ते ।

२. सर्वस्वरप्रतिनिधिभूतस्य स्वरकेन्द्रस्य एकस्यां दिशि वामभागारम्भे विसर्गं तद्विपरीतायां दिशि दक्षिणभागान्तेऽनुस्वारं निवेश्य अन्यमेकं समद्विबाहुत्रिभुजं सृष्ट्वा विसर्गः सृष्टिवर्णः प्रकृतिश्च, अनुस्वारस्तु संहारवर्णः पुरुषश्च इति तन्त्रसम्मतं वैपरीत्यं[१३०] प्रदर्श्यते ।

---

१३०. (क) बिन्दुः संहार इत्युक्तो विसर्गः सृष्टिरुच्यते —अ.बु.सं. (१६।६६)

(ख) बिन्दुः पुरुष इत्युक्तो विसर्गः प्रकृतिर्मता —प्र.सा.त. (४।१९)

३. वर्गेषु सजातीयानां वर्णानां मध्ये पारस्परिकी दूरता वर्णचित्रे समत्वेन प्रदर्शिता सती तेषां साम्यं सूचयति । यथा—

i) अननुनासिकाल्पप्राणयोः प्रथमतृतीययोर्मध्ये
ii) महाप्राणयोर्द्वितीयचतुर्थयोर्मध्ये
} आकृत्या इमे रेखे समाने ।

iii) अघोषयोः प्रथमद्वितीययोर्मध्ये
iv) अननुनासिकघोषयोस्तृतीयचतुर्थयोर्मध्ये
} आकृत्या इमा रेखाः समानाः

v) अल्पप्राणघोषयोस्तृतीयपञ्चमयोर्मध्ये

(क) वर्ग्यविषमवर्णेषु प्रथम-तृतीयमध्यगता रेखा दीर्घा सती, तृतीय-पञ्चममध्यगतारेखा च ह्रस्वा सती परस्परेण असमानं दूरत्वं प्रदर्शयन्त्यौ 'प्रथमतृतीययोर्भेदोऽघोषघोषरूपः, तृतीयपञ्चमयोश्चाननुनासिकानुनासिकरूपः' इति भेदद्वैविध्यं सूचयतः ।

(ख) कस्यचिद्वर्गस्य कश्चिद्वर्ण ऊर्ध्वाधोभावेन विनिवेशितस्य सन्निहितवर्गस्य सजातीयेन वर्णेन समां दूरतां वर्णचित्रे दर्शयंस्तयोः साम्यमभिव्यनक्ति, रेखासंयोगस्थले विनिमयतत्त्वं च सूचयति ।

४. वर्ग्यवर्णानां सन्निवेशपद्धतिः पाटीगणितीयश्रेणी (Arithmetical progression)दिशा व्याख्यातुं शक्यते । एतदर्थम्—

(क) (i) यदि वर्गस्य कमपि वर्णं सञ्ज्ञा (term) इत्याख्याय तत्प्रथमाक्षरेण सम् (t) इत्यनेन सङ्केत्येत—

इत्थमूर्ध्वाधोभावेन विन्यस्तेषु पञ्चसु वर्गेषु प्रथमवर्गस्य कश्चिद्वर्णः सम्१ इति, द्वितीयवर्गस्य तत्सजातीयो वर्णः सम्२ इति, तृतीयवर्गस्य तत्सजातीयो वर्णः सम्३ इति, एवं क्रमेण पञ्चानां वर्गाणां तत्तन्निर्दिष्टवर्णा यथाक्रमं

सम्१, सम्२, सम्३, सम्४, सम्५ इति गृह्येरन्,

(ii) ऊर्ध्वाधोभावेन विन्यस्तयोः सन्निहितयोः समोर्दूरत्वस्य पार्थक्यं (difference) पा (d) इति गृह्येत,

(iii) यत्किञ्चित्संख्यक उद्दिष्टो वर्णः उ सम् इत्याख्यायेत,

तर्हि कस्यचित् उ सम् इत्यस्य मूल्यम् उ सम् १ = सम् + (उ-1) × पा ($T_n = T_1 + (n - 1) \times d$) इत्येवं प्रकारेण निरूपयितुं शक्यम्[१३१]।

उदाहरणम्—चतुर्थश्रेण्यां वर्तमानः टः उ सम्रूपेण गृह्येत चेत्,तदा सम्४ = सम्१ + (४ − १) × पा इति मूल्यं भवति ।

(ख) (i) आनुभूमिकभावेन अवस्थितयोः प्रथमतृतीयेति, द्वितीय-चतुर्थेति च वर्णयुग्मयोः (यथा— क-ग, ख-ङ) दूरत्वपार्थक्ये पा१ इति गृहीते,

(ii) तिर्यग्रेखासंयुक्तयोः प्रथमद्वितीयेति, तृतीयचतुर्थेति च वर्णयुग्मयोः (यथा—क् ग् ) दूरत्वपार्थक्ये पा इति गृहीते,
　　　　　　　　ख, घ

(iii) आनुभूमिकभावेनावस्थितस्य तृतीय-पञ्चमेति वर्णयुग्मस्य (यथा—ग-ङ) दूरत्वपार्थक्ये पा३ इति गृहीते,

(iv) एषु वर्णयुग्मेषु सम् इति गृहीतेषु

(v) प्रथमवर्गस्य किमपि वर्णयुग्मं सम् १ भावेन परिकल्प्य तद-

धोधोऽवस्थितेषु यथाक्रमम् सम्२ , सम्३ , सम्४ , सम्५ , इति गृहीतेषु,

ऊर्ध्वाधोऽवस्थितानां सर्वेषां वर्णयुग्मानां मूल्यं पूर्वोक्तपाटीगणित-रीत्या आनेतुं शक्यम् ।

एतत्प्रक्रियाऽवलम्बनेन वर्गपञ्चकगतस्य वर्णपञ्चकपञ्चकस्य विषये इमानि तथ्यानि प्रकटीभवन्ति, यानि कस्माच्चिदपि वर्णमालाक्रमान्नैव लभ्यन्ते ।

(अ) 'सम्'सु प्रत्येकं स्वश्रेण्या निर्दिष्टो वर्णो वर्णयुग्मं वा भवति ।

---

१३१. द्र. Intermediate Algebra (P. 63)

(आ) पा१ विशिष्टेषु—

(क) प्रथमश्रेणीक 'सम्'सु प्रत्येकमननुनासिकाल्पप्राणवर्णयुग्मं भवति ।

(ख) द्वितीयश्रेणीक 'सम्'सु प्रत्येकं महाप्राणवर्णयुग्मं भवति ।

(इ) पा२ विशिष्टेषु—

(क) प्रथमश्रेणीक 'सम्'सु प्रत्येकमघोषवर्णयुग्मं भवति ।

(ख) द्वितीयश्रेणीक 'सम्'सु प्रत्येकमननुनासिकघोषवर्णयुग्मं भवति ।

(ई) पा३ 'सम्'सु प्रत्येकमल्पप्राणघोषवर्णयुग्मं भवति ।

(उ) रेखासंयुक्तं किंचित् 'सम्' द्वयं पारस्परिकं प्रत्यक्षपरिवर्तनं लभते (यथा, क-ख, क-ग, क) ।
च

५. चित्रे अन्तिमदशरतरेषु स्थापिताः पञ्च वर्गाः पञ्चश्रेणीषु पञ्चस्तम्भेषु च संश्लिष्टविन्यासेन ( compact arrangement ) पञ्चश्रेणीपञ्चस्तम्भेति द्वैतराशिव्यूहेन (5 × 5 matrics i e. a matrics with 5 rows and 5 columns) प्रकाशयितुं शक्यन्ते[१३२] । यथा—

स्तम्भाङ्काः →१ २ ३ ४ ५

श्रेण्यङ्काः:
↓

| | | | | | |
|---|---|---|---|---|---|
| १ | क | ख | ग | घ | ङ |
| २ | च | छ | ज | झ | ञ |
| ३ | त | थ | द | ध | न |
| ४ | ट | ठ | ड | ढ | ण |
| ५ | प | फ | ब | भ | म |

१३२. द्र. A Text Book of Higher Alzebra (P. 271)

एषु वर्णेषु प्रत्येकं राशिव्यूहस्य उपादानं (element) भवति। तच्च समन्वितश्रेणीस्तम्भरूपेण इत्थं सङ्केतयितुं शक्यते—

| | | | | |
|---|---|---|---|---|
| $रा_{१,१}$ | $रा_{१,२}$ | $रा_{१,३}$ | $रा_{१,४}$ | $रा_{१,५}$ |
| $रा_{२,१}$ | $रा_{२,२}$ | $रा_{२,३}$ | $रा_{२,४}$ | $रा_{२,५}$ |
| $रा_{३,१}$ | $रा_{३,२}$ | $रा_{३,३}$ | $रा_{३,४}$ | $रा_{३,५}$ |
| $रा_{४,१}$ | $रा_{४,२}$ | $रा_{४,३}$ | $रा_{४,४}$ | $रा_{४,५}$ |
| $रा_{५,१}$ | $रा_{५,२}$ | $रा_{५,३}$ | $रा_{५,४}$ | $रा_{५,५}$ |

अत्र 'रा' इत्यनेन राशिव्यूहः, प्रथमसंख्याभिः श्रेणी, द्वितीय-संख्याभिश्च स्तम्भः प्रकाश्यते।

श्रेण्याः क इति स्तम्भस्य च ख इति सङ्केते कृते राशिव्यूहस्य प्रत्येकमुपादानं $रा_{क,ख}$ इति वक्तुं शक्यते। उभयसूची १तः ५पर्यन्तस्य कस्यापि राशिव्यूहस्य समन्वितमूल्यं प्रकाशयति। यथा— $रा_{१,१}=$क, $रा_{५,२}=$फ इत्यादि।

i) यदि $रा_{क,ख}$ात् $रा_{ग,घ}$ं वियुज्य द्वयोरुपादानयोः साम्यं प्रकाश्येत,

ii) यदि च ध्रुवक (constant)स्य मूल्यं $ध्रु_{१}$, $ध्रु_{२}$ इत्यादिभिः प्रकाश्येत,

तर्हि एतानि चत्वारि सूत्राणि सम्भवन्ति—

१. $रा_{क,ख} - रा_{क+१,ख} = ध्रु_{१}$

२. $रा_{क१} - रा_{क३} = ध्रु_{२}$

३. $रा_{क३} - रा_{क५} = ध्रु_{३}$

४. $रा_{क१} - रा_{क२} = ध्रु_{४} = रा_{क३} - रा_{क४}$

एतत्सूत्रचतुष्टयम् अत्र निरूपितेषु सर्वेषु क,खेषु प्रयोज्यम्।

प्रथमसूत्रस्य तात्पर्यम्—

अस्मिन् सूत्रे खः १-तः ५-पर्यन्तानि ५ मूल्यानि ग्रहीतुं प्रभवति, किन्तु कः १ तः ४-पर्यन्तानि, न तु ५ इति। यतो हि एतत्सूत्रम् क=५ इत्युच्यमाने रा५ ख — रा६ख = ध्रु इत्यर्थकं स्यात्। अत्र तु रा६ इति नास्त्येव। इत्थं क-स्य पञ्चममूल्यग्रहणाभावात् एतत्सूत्रम् (४ × ५ =)२० समीकरणानि प्रददाति। तथाहि— ख=१ इत्यर्थम्— एतानि समीकरणानि लभ्यन्ते—

रा१,१ – रा२,१ = ध्रु१

रा२,१ – रा३,१ = ध्रु१

रा३,१ – रा४,१ = ध्रु१

रा४,१ – रा५,१ = ध्रु१

प्रकारान्तरेण कथने—

रा१,१ – रा२,१ = रा२,१ – रा३,१ = रा३,१ – रा४,१ = रा४,१ – रा५,१

अथ वा

क—च = च—त = त—ट = ट—प।

इत्थं ख२ अर्थे— ख—छ = छ—थ = थ—ठ = ठ—फ

ख३ अर्थे— ग—ज = ज—द = द—ड = ड—ब

ख४ अर्थे— घ—झ = झ—ध = ध—ढ = ढ—भ

ख५ अर्थे— ङ—ञ = ञ—न = न—ण = ण—म

द्वितीयसूत्रस्य तात्पर्यम्—

क—ग = च—ज = त—द = ट—ड = प—ब

ख—घ = छ—झ = थ—ध = ठ—ढ = फ—भ

तृतीयसूत्रस्य तात्पर्यम् —

ग — ङ = ज — ञ = द — न = – = ब — म

चतुर्थसूत्रस्य तात्पर्यम् —

क — ख = च — छ = त — थ = ट — ठ = प — फ

ग — घ = ज — झ = द — ध = ड — ढ = ब — भ

एषां साम्यवैषम्याणां ज्ञानं संगणकयन्त्राय (Computer) वर्णानां पार्थक्यज्ञानस्य, उच्चारणस्य, उच्चारणबोधस्य च शिक्षणे नूनमेव सहायकं भविष्यति।

## ३८. सावर्ण्यं सस्थानत्वमन्तरङ्गत्वं च

साम्प्रतं कोष्ठकत्रयेणैतेषां वर्णचित्रप्रकाशिताः सूच्यः प्रदीयन्ते।

# कोष्ठकम्—६

## सावर्ण्यसूची

| उच्चारणस्थानानि | सवद्ध—वर्णाः | | | | |
|---|---|---|---|---|---|
| कण्ठः | क—ग | क—ख | ग—ङ | ग—घ | ख—घ |
| तालु | च—ज | च—छ | ज—ञ | ज—झ | छ—झ |
| दन्ताः | त—द | त—थ | द—न | द—ध | थ—ध |
| मूर्धा | ट—ड | ट—ठ | ड—ण | ड—ढ | ठ—ढ |
| ओष्ठः | प—ब | प—फ | ब—म | ब—भ | फ—भ |

## कोष्ठकम्–७

### सस्थानत्वसूची

| उच्चारणस्थानानि | संबद्ध—वर्णाः |
|---|---|
| कण्ठः | अ—ए अ—ओ अ—ऐ अ—औ अ—विसर्गः |
| तालु | इ—ए इ—य य—ज श—छ |
| ओष्ठः | उ—ओ उ—व, व—ब |
| कण्ठतालु | ए—ऐ |
| कण्ठोष्ठम् | ओ—औ |
| मूर्धा | ऋ—र र—ड ष—ठ |
| दन्ताः | ऌ—ल ल—द स—थ |
| नासिका | अनुस्वारः—न, म |
| सर्वोच्चारणस्थानानि | स्वरकेन्द्रम—ऋ, ऌ |

## कोष्ठकम्–८

### अन्तरङ्गसूची

| अन्तरङ्गत्वप्रकाराः | संबद्ध—वर्णाः |
|---|---|
| अल्पप्राणाघोषाः | क—च च–त त—ट |
| महाप्राणाघोषाः | विसर्गः—स श—स स—ष ष—ख ख–छ छ–थ थ–ठ |
| अल्पप्राणघोषाः | ऋ—ऌ ग–ज ङ–ञ ज–द ञ–न द–ड न–ण |
| महाप्राणघोषाः | घ—झ झ—ध ध—ढ |
| स्वतन्त्रकोटिकौ | र—स |

उच्चारणस्थानमाभ्यन्तरप्रयत्नश्च ययोः समानं तौ सवर्णौ भवतः। आभ्यन्तरप्रयत्ने असमाने केवलमुच्चारणस्थाने च समाने सस्थानौ भवतः। एतदुक्तं यत्र समानस्थानत्वे स्थितेऽपि प्रयत्नवैशिष्ट्यात् सवर्णेति पृथगाख्या क्रियते, न तु तत्र सस्थानशब्दः प्रयुज्यते। अत्रान्तरङ्गशब्दो व्याकरणव्यवहृतान्तरशब्दार्थे[133] प्रयुक्तः। यत्र सावर्ण्यं सस्थानत्वं च नास्ति, तत्र केवलं बाह्यप्रयत्नकृतं साम्यमन्वेषणीयम्। एतदेवात्रान्तरङ्गत्वप्रयोजकम्। यद्यपि आभ्यन्तरप्रयत्नकृतं साम्यमपि विद्यते, तथापि न तद्वर्णपरिवर्तनं प्रयोजयति। यथा—क-भ। अनयोः सावर्ण्यं सस्थानत्वमन्तरङ्गत्वं वा नास्ति। स्पृष्टेत्याभ्यन्तरप्रयत्नदिशा तु साम्यं विद्यत एव। किन्तु न कुत्रापि क-भ-योः परस्परपरिवर्तनं भवति। तस्मात् केवलाभ्यन्तरप्रयत्नकृतं साम्यमत्रोपेक्षितम्। यद्यपि स्थानसाम्यमप्यन्तरङ्गत्वप्रयोजकम्, तथापि स्थानस्य प्राधान्यप्रकाशनार्थं सस्थानेति पृथक्श्रेणी कल्पिता। तथा च परिभाषा—यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः[134] इति।

इत्थं सावर्ण्यसस्थानत्वान्तरङ्गत्वेषु यथापूर्वं प्राधान्यं वेदितव्यम्, तदनुसारेण च सामञ्जस्यं निर्णेयम्।

सावर्ण्यसस्थानत्वान्तरङ्गत्वनिरूपणे तेषामेव वर्णानां विषये विचारा कृताः, ये रेखया परस्परेण संयुक्ताः, न त्वन्ये। यतः प्रत्यक्षवर्णविनिमयात्मकं लक्ष्यमेत एव पूरयन्ति। यथा—क-ग-इत्यादीनां सावर्ण्यसम्बन्धः, इ-य-इत्यादीनां सस्थानत्वसम्बन्धः, च-क-इत्यादीनां चान्तरङ्गत्वसम्बन्धोऽत्र प्रकाशितः। इमानि सम्बन्धप्रकाशनानि यथाक्रमम् काक>काग (हि.), अति+अन्त>अत्यन्त, वाक्>वाग् इत्यादिविनिमयलक्ष्याण्यनुधावन्ति। परस्परेण ख-ग इत्यादीनां सावर्ण्यम्, इ-च इत्यादीनां सस्थानत्वम्, क-ट इत्यादीनामन्तरङ्गत्वं च शास्त्रविहितमपि लक्ष्यसिद्धावनुपकारकमिति त्यक्तम्। तत्र हेतुस्तु तादृशसामञ्जस्यस्य प्रत्यक्षत्वाभावः।

---

१३३. स्थानेऽन्तरतमः—अष्टा. (१।१।५०)

१३४. परिभाषेन्दुशेखरः (१३)

एतत्प्रकाशनार्थं कवर्गोऽधुना कोष्ठकमध्ये परीक्ष्यते ।

## कोष्ठकम्—९

### कवर्गमध्ये सामञ्जस्यतारतम्यम्

| वर्णाः | बाह्यप्रयत्नाः | | |
|---|---|---|---|
| क | अघोषः | अल्पप्राणः | अननुनासिकः |
| ख | ,, | महाप्राणः | ,, |
| ग | घोषः | अल्पप्राणः | ,, |
| घ | ,, | महाप्राणः | ,, |
| ङ | ,, | अल्पप्राणः | अनुनासिकः |

नागेशमतमनुसृत्य[१३५] आनुनासिक्यं बाह्यप्रयत्नरूपेणात्र गृहीतम् । एषु वर्णेषु परस्परं सावर्ण्ये स्थितेऽपि बाह्यप्रयत्नदिशा केषाञ्चिदेकेन भेदः, केषाञ्चिदेकाधिकेन । कात् ख-गयोरेकेन प्रयत्नेन पार्थक्यं वर्तते, घ-ङयोश्च द्वाभ्यां द्वाभ्यां प्रयत्नाभ्याम् । अतोऽधिकसाम्यात् क-स्य ख-गाभ्यामेव सामञ्जस्यं प्रदर्शितम् ।

ए-ऐ-इत्यनयोर्मध्ये ऐ-ओ इत्यनयोर्मध्ये च सस्थानत्वमेव वर्तते, न तु सावर्ण्यम्; अस्पृष्टविवृतानां स्वराणां मध्ये ए-ओ इत्यनयोर्विवृततरत्वम्, ऐ-औ इत्यनयोश्च विवृततमत्वमिति शिक्षोक्तप्रयत्नभेदात्[१३६] । अन्यच्च, एते चत्वारः प्रत्येकं ध्वनिग्रामा, न तु कश्चित् कस्यचित् समध्वनिः । अत एव माहेश्वरसूत्रेषु चत्वारोऽप्येते स्थापिताः । न हि कोऽपि समध्वनिस्तत्र स्थानं लम्भितः । किं च ए-ओ इत्यनयोः पूर्वांशभूतोऽकारः संवृत इति

१३५. इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम् ।
—श. शे. ( संज्ञाप्रकरणम् पृ. ३५)

१३६. तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ —पा. शि. (२१)

मतान्तरमप्यस्ति, ए ओ इत्यनयोः पूर्वांशस्तु विवृत इति सर्वसम्मतम्[१३७]। अतः प्रयत्नभेदः सावर्ण्यं व्याहन्ति।

पाणिनिः ऋलृवर्णयोः सावर्ण्यं नानुशशास, किन्तु भङ्ग्या सूचितवान्। ऋदुपधात् क्यप्प्रत्ययमनुशासतोऽपि[१३८] तस्य लृदुपधात् क्यब्निषेधः सूचयति यत्, स ऋ-लृवर्णौ सवर्णौ मन्यते। कात्यायनस्तु तयोः सावर्ण्यं प्रत्यक्षं वक्ति[१३९]। तयोः ऋक्प्रातिशाख्योक्ते जिह्वामूलीयत्वपक्षे गृहीते[१४०] इदं सावर्ण्यं सम्भवत्येव।

माहेश्वरसूत्रे तु ऋकारस्योच्चारणस्थानं मूर्धा, लृकारस्य च दन्ता इति स्थानभेदपक्षो[१४१] नूनं गृहीतः। अन्यथा ऋ-लृ-वर्णयोः सावर्ण्ये सति तयोरेक एव ऋलृक्सूत्रे निवेशितः स्यात्। प्रतिसवर्णस्वरं हि एकैकमेव तेन गृहीतम्। तस्मादिदं सावर्ण्यविषये मतद्वैधम्। एतच्च देश-काल-शाखाभेदजनितं भवेदिति सम्भावयामः। प्रस्तुतसन्दर्भे तु स्थानभेदपक्ष एव गृहीतः। तस्मात्तौ पारिशेष्यादन्तरङ्गश्रेण्यां निवेशितौ।

---

१३७. केचित्तु—ए-ओ इत्यनयोः संवृतावर्णत्वे मानाभावः, ह्रस्वाकार-व्यतिरिक्तायां विवृतत्वस्यैवाइउण्सूत्रे भाष्ये उक्तत्वात्, प्रत्यापत्तिशास्त्रस्यावयवे प्रवृत्तौ मानाभावाच्च, शास्त्रदृष्ट्या तस्यासिद्धत्वाच्च चिन्त्यमिदमित्याहुः। अन्ये त्वेतद्भाष्यप्रामाण्यात् ए-ओ इत्यनयोरकारांशे संवृतत्वमेव। इतरांश एव विवृतत्वम्। तदुपरागाच्च न संवृतत्वस्य लोके प्रयोगे स्पष्टमवभासः। ए-ओ इत्यनयोरकारांशेऽपि विवृतत्वमेवेत्याहुः।

—उद्द्योतः (१।१।१० सूत्रस्थः)

१३८. ऋदुपधाच्चाक्लृपिचृतेः —अष्टा. (३।१।११०)

१३९. ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्। —सि.कौ.(१२ सूत्रस्थवार्तिकम्)

१४०. पा. टी. ५।१०१।

१४१. ऋटुरषाणां मूर्धा, लृतुलसानां दन्ताः। —सि.कौ. (१० सूत्रस्था)

र-स-योर्मध्ये विनिमयो बहुत्र दृश्यते । तथा हि—

(क) संस्कृते स-स्थाने रो भवति, र-स्थाने च विसर्गमाध्यमेन सो भवतीति पाणिनिरनुशास्ति[१४२] ।

(ख) डेनमार्कभाषायां र-सौ समानाविति Jespersen वक्ति[१४३] ।

(ग) स्वरद्वयमध्यगतः सः लेतिनभाषायां रो भवतीति T. Hudson समीक्षते[१४४] ।

स-परक इव र-परकोऽप्यनुस्वारो वेदे ँ इत्युच्चार्यते[१४५] ।

एवं सत्यपि पाणिनीयव्याकरणे तयोर्मध्ये न किमपि सामञ्जस्यं प्रतिपादितम् । स्थानदृष्ट्या हि दन्त्यः सो मूर्धन्यात् राद् भिन्नः । आभ्यन्तर-प्रयत्नोऽपि स-स्य अर्धस्पृष्टम्, र-स्य चेषत्स्पृष्टम् । बाह्यप्रयत्नश्च नोभयोः समानः । सः अघोषमहाप्राणः, रस्तु घोषाल्पप्राणः । यद्यपि जिह्वाकरणकत्वेनोभयोः साम्यमस्ति, तथापि तावतैव सामञ्जस्यं न वक्तुमुचितम् । किन्तु भाषासु विद्यमानं परिवर्तनं समर्थयितुं निरुपायतया तयोर्मध्येऽन्तरङ्गत्वं प्रकाशितं यत् खलु वस्तुतो नास्ति । अतस्तयोः सम्बन्धः स्वतन्त्रकोटिक एव ।

करणवैषम्यवतोः कयोश्चिद्वर्णयोर्मध्ये सामञ्जस्यं न प्रदर्शितम्, यथा—ओष्ठकरणकस्य पवर्गस्य जिह्वाकरणकैरितरवर्गैः सह सामञ्जस्याभावाद्व्यवस्थासंयोगो न कृतः । अत्रेदं तात्पर्यं यत्, पवर्गमुच्चारयितुमुद्यतः-

---

१४२. ससजुषो रुः, खरवसानयोर्विसर्जनीयः, विसर्जनीयस्य सः ।
—अष्टा. (८।२।६६, ८।३।१५, ८।३।३४)

१४३. Mod. Language Review, 14, 94 thinks that the prevalence of the plural ending - s over - n is due to the Danish who had no plural in -n, and whose 'r' was similar to 's'.
—Growth and Structure of the English Language ( foot note, Sect. 79, Chap. 4, P. 76)

१४४. पा. टी. ३।२६

१४५. अथानुस्वारस्य ँमित्यादेशः शषसहरेफेषु
—प्रतिज्ञापरिशिष्टसूत्रम् ( ३।१ )

कोऽपि स्वतः कवर्गं नोच्चारयेत्; तथा कवर्गमुच्चारयन्न पवर्गम्। पच्: cook इत्यादौ प-स्थाने कत्वं तु च-स्थाने व्यवहृतस्य k इत्यस्य प्रभावादेव। पञ्च: fif (प्रा. इ.) इत्यत्रापि द्वितीयः f चकारसामञ्जस्यहेतुको न भवति, अपि तु प्रथम-f-प्रभावजन्य इत्युक्तं प्राक् (अधि. ३२)। एवमन्यत्राप्यूह्यम्।

कस्यचिद्वर्णस्य स्वक्षेत्रगतेन प्रथमप्रतिवेशिक्षेत्रगतेन वा वर्णेन सामञ्जस्यसूचको रेखासंयोगो यथा स्यात्तथैव चित्रं निर्मितम्। अस्पृष्टक्षेत्रगतस्य कस्यापि वर्णस्य अर्धस्पृष्ट-स्पृष्टक्षेत्रीयेण केनापि वर्णेन विनिमयोऽस्वाभाविक इत्येतत्प्रकाशनार्थं चित्रे अस्पृष्टक्षेत्रस्य स्पृष्टार्धस्पृष्टक्षेत्रयोश्च मध्ये ईषत्स्पृष्टक्षेत्रस्य व्यवधानं सम्पादितम्।

रेखासंयोगहीनयोरपि वर्णयोः प्रयोगक्षेत्रे यत् पारस्परिकं परिवर्तनं दृश्यते, तत्परोक्षमित्येव वेदितव्यम्। प्रथमं तत्र रेखासंयुक्तवर्णरूपेण परिवर्तनं जायते, परस्ताच्च तस्य परिवर्तनस्य पुनः परिवर्तनेन ईदृशं परोक्षपरिवर्तनं भवति। उदाहरणम्—नक्तम्: night (=निघ्त्, क्रैस्त - पञ्चदशशतकात्प्रागुच्चारणम्)। अत्र क-gh-योर्मध्ये प्रत्यक्षसामञ्जस्यं नास्ति। अतोऽत्र सामञ्जस्यक्रमः क-ख-घ इति क-ग-घ इति वा स्यात्। कतरोऽत्र ग्रहीतव्य इति जिज्ञासायां 'निख्त्' इति समान्तरालजर्मनीरूपदर्शनात् क-ख-घ इत्येव क्रमो निश्चेतव्यः। यत्र तु इदं साधकप्रमाणं नास्ति, न वा किमपि बाधकप्रमाणं दृश्यते, तत्र विनिगमनाभावात् यथेच्छं यः कोऽपि क्रम आदर्तव्यः। इत्थं प्रत्यक्षपरोक्षसामञ्जस्यमेव पूर्ववर्णितप्रत्यक्षपरोक्षपरिवर्तने हेतुः।

वाक्माधुरी>वाग्माधुरी, वाङ्माधुरी इति पाणिनिना द्विविधं रूपं प्रार्थितम्[१४१]। अत्र प्रथमतः को गो भवति, पश्चाच्च गो ङो भवतीति परिवर्तनक्रमदिशा कल्पनीयम्। वाक्+मयम्>वाङ्मयम् इत्यत्र संस्कृते

१४१. यरोऽनुनासिकेऽनुनासिको वा —अष्टा. (८।४।४५)

'वाग्मयम्' इति रूपस्यानुशासनाभावेऽपि वेदे तादृशरूपस्य स्वीकारात्[147] स एव क्रमः कल्पनीयः। यत्र चेदृशं प्रमाणं नास्ति, तत्रापि स एव क्रमः स्वीकर्तव्यः। यथा—सुखार्थकयोः मृड्-पृड-धात्वोरेक एवान्यविधंरूपमधारयदिति कल्पयितुं शक्यम् — मृड इति पृडरूपेण परिणतः पृड इति मृडरूपेण वेति। प म-योः साक्षात्सामञ्जस्याभावात् 'बृड्' इति मध्यवर्तिस्तरोऽवश्यमनुमातव्यः। इदं च रूपं क्वचिद्भाषायामस्तु माऽस्तु वा, एतस्य कल्पनं विना प्रत्यक्षसम्बन्धस्यानुपपत्तिरेव स्यात्।

परोक्षपरिवर्तनस्थलेषु रेखामार्गेऽनेकविधे सति सदैव लघुमार्गो ग्राह्यः, औचित्यात्। लघुमार्गस्य चैकाधिक्ये साधकबाधकप्रमाणाभावेन चानिर्णये यथेच्छमेको ग्रहीतव्यः इत्युक्तमेव। यथा—पत्—पड (प्रा.)। अत्र रेखामार्गेण त-ड-योः सामञ्जस्ये परीक्ष्यमाणे बहवो मार्गा दृश्यन्ते। यथा— (१) त-च-छ-झ-ज-द-ड (२) त-च-छ-झ-ध-ढ-ड (३) त-थ-छ-झ-ध-द-ड (४) त-थ-ध-द-ड (५) त-द-ड (६) त-ट-ड। एषु लघुत्वादन्तिमाभ्यामेको ग्राह्यः।

अत्र प्रयुक्तः सामञ्जस्यक्रमशब्दगतः सामञ्जस्यशब्दः 'कस्यचिद्वर्णस्य वर्णान्तरेणाधिकसामञ्जस्यमित्यर्थे व्यवहृतः। अचिन्तनीयभावेन परिवर्तनशीलाया भाषायाः शब्दराशिर्यत्सर्वस्व अनेन निकटतममार्गेण परिवर्तितः स्यादित्यत्र लेखकस्य विश्वासो नास्ति, नापि तत्प्रतिपादनं वर्णचित्रस्य लक्ष्यम्।

## ६६. अस्पृष्टवर्णेषु परस्परविनिमयः असम्भवः

अस्पृष्टप्रयत्नोच्चार्येषु स्वरवर्णेषु वस्तुतः परस्परं विनिमयो न भवति। तथा हि—

(क) अ-इ-उ-मध्ये विनिमयात्मकं परिवर्तनं युक्त्यनुभूतिविरुद्धम्। अत्र कारणं खलु— इ-उ-उच्चारणार्थं करणभूताया जिह्वाया ओष्ठस्य वा

---

१४७. प्रत्यये भाषायां नित्यम् —सि. कौ. (११६ सूत्रस्थवार्तिकम्)

सर्वोच्चस्थितिरावश्यकी। अ-उच्चारणार्थं तु निम्नस्थितिरपेक्ष्यते। किंच इ-उच्चारणसमये ओष्ठः सर्वाधिकभावेन प्रसारितो भवति, उ-उच्चारणसमये च सर्वाधिकभावेन वर्तुलः। किन्तु अ-उच्चारणवेलायां प्रसारणं वर्तुलतां च विहाय स्वाभाविकस्थितौ वर्तते। अत आधुनिकवर्णविद्भिः इ: अग्रसंवृतः, उ : पश्चात्संवृतः, अश्च विवृतः कथ्यते। करणमुच्चतमस्थितौ निवेश्य वर्णमुच्चारयितुं प्रवर्तमानो जनः निम्नस्थित्युच्चारणयोग्यं वर्णमुच्चारयितुं कदापि न प्रभवति। एवं प्रसारिततमेन वर्तुलतमेन वा ओष्ठेन उच्चार्यमाणो वर्णः स्वाभाविकस्थितौ वर्तमानेन ओष्ठेन न कदाप्युच्चार्यते। वर्णशास्त्रीयभाषया इदमनेन रूपेणोच्येत यत्, संवृतयोः इ-उ-इत्यनयोरुच्चारणे प्रवृत्तौ कथमपि विवृतः अः उच्चारयितुं न शक्यते, न वा विवृतस्य अ-स्य उच्चारणार्थं प्रस्तुतौ संवृतौ इ-उ-इत्येतावुच्चारयितुं शक्येते। इत्थम् उच्चतमाग्रस्वरस्य इकारस्योच्चारणवेलायामुच्चतमपाश्चात्यस्वरस्य उकारस्योच्चारणमसम्भवम्। तथा उकारोच्चारणवेलायामपि इकारस्य।

किन्तु संवृताभ्याम् इ-उ-भ्यां प्रथमतः अर्धसंवृतयोः ऍ ऒ इत्यनयोर्विकासे ततो ह्रासेन विवृतस्य अ-स्य लाभः—इति कल्पना अनवद्या भवेत्। तेन सद्>सीदति, तमस्>तिमिर, नक्तम् : nicht (ज.) इति शब्दयुगलेषु दृश्यमानम् अ-इ-मध्ये परिवर्तनं न्यायसङ्गतं विधातुं 'सॆद्, तॆमस् इत्यादिरूप एको मध्यवर्ती ऍ—स्वरः कल्पनीयः। एवं घातक> घातुक, अग्नि : ugnis (लि.), कह् (ग्री.)>कुह् (ग्री.) इति शब्दयुगलेषु लक्ष्यमाणम् अ-उ-मध्ये परिवर्तनमुत्पादयितुं घातॊक इत्यादिकः मध्यवर्ती ऒस्वरः कल्पनीयः। ऍ—ऒ इति स्वरद्वये जिह्वायाः स्थितिर्मध्यमा भवति। अस्यां कल्पनायां स्वीकृतायाम् अ>इ इत्यस्यार्थो भवति—अ> ए>इ। अ>उ इत्यस्य चार्थः—अ>ओ>उ इति। एतौ ए-ओ-स्वरौ नैव सन्ध्यक्षरस्वरौ, परन्तु तत्सजातीयौ अ॑+इ, अ॑+उ॑—इत्यर्धमात्राविशिष्टस्वरद्वयघटितौ एकमात्रको समानस्वरावेव, I.P.A. (International Phonetic Association) कल्पित मानस्वररूपम् e, o इति। अ>इ इत्यस्य

गाणितिकविश्लेषणम्—अ+इ=ए–अ=इ इति भविष्यति। तथा अ> उ इत्यस्य अ+उ=ओ–अ=उ इति विश्लेषणं भविष्यति। अनेन भावेन पूर्वं वृद्धौ परस्ताच्च क्षये अ-परिवर्तन इ-उ वर्णौ भवतः। तस्मात् वस्तुतो नेतो विनिमयस्य, अपितु यथाक्रमं वृद्धिक्षययोर्विषयौ। इ>अ, उ>अ इत्येतयोरपि एतद्विपरीतगत्या वृद्धिक्षयभावेन अनयैव रीत्या विश्लेषणं सुगमम्। एतत्सर्वं पूर्वोक्तस्य विजातीयपरोक्षपरिवर्तनान्तर्गतस्य वृद्धिपूर्वकक्षयस्य (अधि. २१) उदाहरणं भविष्यति।

अत्र पी. डी. गुणे कृता मीमांसा अन्यादृशी। तत्कथनात् ज्ञायते यत्— समानस्वर (simple vowel)स्य परिवर्तनं न वृद्धिपूर्वकक्षयात्मकम्, अपि तु क्षयपूर्वकवृद्ध्यात्मकम्। तन्मते समानस्वरस्य प्रथमं क्षयो भूत्वा तं रङ्गहीनसूक्ष्मोदासीनस्वर( colourless subtle indifferent vowel) - ə - रूपं विदधाति। ततोऽस्य वृद्ध्या यः कश्चित् समानस्वरो भवति। तेन प्रदर्शितं यत्— "यम् : यिम् (जे.) प्रभृतिषु संस्कृतभाषया अः ə माध्यमेन जेन्दभाषाया इकारेण सह सामञ्जस्यशीलो भवति[१४८]। इदं क्षयपूर्विकाया वृद्धेरुदाहरणं भविष्यति।

केश्चित्पाश्चात्त्यमनीषिभिरत्र वृद्धिपूर्वकक्षयात्मिका, कैश्चिच्च क्षयपूर्वकवृद्ध्यात्मिका परिवर्तनपद्धतिरङ्गीकृता। यथा— इकारत्वप्राप्तये प्रथमम् अकारस्य इकारदिशि विकासो भवतीति Weber कथयति, केन्द्रस्वरदिशि ह्रासो भवतीति च Whitney निरूपयति[१४९]।

---

१४८. (सं.) अ : (अव.) इ (through ə) before न्, म्। यम्-यिम्—An Introduction to Comparative Philology (Part-3, P. 144)

१४९. Whatever degradation from its pure open quality the अ has suffered must have been, it seems to me, in the direction of the neutral vowel (Englsh "short u" in but, son, blood), which has so generally taken its place in the

कयोश्चित् समानस्वरयोर्मध्ये जायमानस्य परिवर्तनस्य विश्लेषणार्थं शंसितपद्धत्योरेकतरो ग्राह्यः, न तु विनिमयात्मकं परिवर्तनं तत्राङ्गीकर्तव्यम् ।

(ख) सन्ध्यक्षरसमानाक्षरयोर्मध्ये जायमानं पारस्परिकपरिवर्तनं नैव विनिमयात्मकम्, अपि तु वृद्धिक्षयात्मकमिति प्राक्प्रतिपादितम् (अधि. १७, १८) ।

(ग) फेन : phom, होदु ( म. प्रा. )>हेउ (ओ.)-प्रभृतिशब्द-युगलेषु कण्ठतालव्यस्य कण्ठोष्ठ्यस्य च मध्ये पारस्परिकं परिवर्तनं दृश्यते । अत्रापि अ-इ इत्यत्रेव वृद्धिपूर्वकक्षयकल्पना क्षयपूर्वकवृद्धिकल्पना वा विधातव्या । तथा हि ए>ओ इत्यस्य विश्लेषणम्—ए>अ>ओ इति वा ए>इ>अँ (ə)>उ>ओ इति वा भविष्यति ।

(घ) ऋ-लृ-स्थाने यत्र अर्-अल्, इर्-इल-प्रभृतयो भवन्ति, यत्र वा अ-इ-उ प्रभृतयो भवन्ति, यत्र च विपरीतगत्या अर्-स्थाने ऋ इति भवति, तत्र सर्वत्राप्यांशिकवृद्धिक्षयौ भवत इति प्राक् (अधि. १७) प्रतिपादितम् । अ-इ-उ-स्थाने ऋ-लृ इत्येतौ कुत्रापि न दृष्टौ । यदि च कुत्रचित् स्याताम्, तत्र पूर्वोक्तदिशा यथायथं वृद्धिक्षयौ कल्पनीयौ ।

(ङ) केनापि स्वरेण विसर्गस्य विनिमयो न भवति । स्वरकेन्द्रेण सह तस्य रेखासंयोगस्तु आश्रयाश्रयिभावद्योतकः ।

(च) अनुस्वारस्यावस्थाऽपीदृश्येव । विसर्गादस्य प्रभेदस्तु—लुप्यमानोऽनुस्वारः क्वचित् स्वाश्रयं स्वरमनुनासिकं विदधाति । यथा—वंश>बाँस (हि.) प्रभृतिषु । ईदृशस्थलेषु अनुस्वारस्थाने चन्द्रबिन्दुर्लिख्यते । किन्तु चन्द्रबिन्दुर्न स्वतन्त्रो वर्णः, अनुनासिकधर्मस्य प्रकाशकं चिह्नमेवेति नात्र वर्णविनिमयस्यावकाशः ।

---

modern pronunciation of India rather than toward an e or o, as suggested by Weber.—Text Translation and Notes on अथर्वप्रातिशाख्य ( १।३६ सूत्रस्थम् )

इत्थं कयोश्चिदस्पृष्टवर्णयोर्मध्ये वस्तुतो विनिमयात्मकं परिवर्तनमसम्भवम् ।

य-व-र-लाः सङ्कोचनरूपाणि, इ-उ-ऋ-लृ इत्येते च सम्पृक्तसम्प्रसारणरूपाणीति तेषां परस्परेण परिवर्तनं वृद्धिक्षयात्मकम्, न तु विनिमयात्मकमिति प्राग् (अधि. १७) विवेचितम् ।

यत्र क-च-ट-त-पानां स्थाने ख-छ-ठ-थ-फाः, ग-ज-ड-द-बानां स्थाने घ-झ-ढ-ध-भा ङ-ञ-ण-न-माश्च जायन्ते, तत्र यथाक्रमं विसर्ग-हकारा-नुस्वारांशवृद्धिः, विपरीतगतौ च क्षय इत्याकलनीयम् ।

प्राचीनशास्त्रकारविवेचनान्यनुसृत्य रेखासंयोगा एषु विहिताः । किं च रेखाभिरसंयुक्तानां वर्णानां चित्रे न काऽप्युपयोगिताऽस्तीति तन्निवेशाभावे च वर्णचित्रमपूर्णं स्यादिति आशङ्का तद्वर्णनिवेशस्य रेखादानस्य च कारणान्तरम् । वृद्धिक्षययोः स्थितिः साम्प्रतं कोष्ठकेन प्रदर्श्यते ।

## कोष्ठकम्-१०

### आंशिकवृद्धिक्षयवर्णसूची

| वृद्धिरूपाणि | क्षयरूपाणि | वृद्धिरूपाणि | क्षयरूपाणि |
|---|---|---|---|
| ए, ऐ | अ, इ | छ | च |
| ओ, औ | अ, उ | ठ | ट |
| ऐ | ए | थ | त |
| औ | ओ | फ | प |
| इ | य | घ | ग |
| उ | व | झ | ज |
| ए, ओ, ऐ, औ अ, इ, उ | ऋ, लृ | ढ | ड |
| ऋ | र | ध | द |
| लृ | ल | भ | ब |
| ख | क | ङ | ग |

अत्रांशिकक्षये सति सन्ध्यक्षराणां समानस्वराः विवृततमयोर्विवृततरौ सम्प्रसारणानां सङ्कोचनानि इतरसमानस्वराणाम् ऋ-लृकारौ, महाप्राणानामल्पप्राणाः, ङ-स्य ग-श्च स्वस्वसम्पर्कानुसारेण भवन्ति; वृद्धौ चैतद्वैपरीत्यम्। ऋ-लृकारयोः पूर्वांशः इतरसमानस्वराणां भग्नांशरूपो भवतीति त्रिभाष्यरत्नोक्तेः ( अधि. १७ ) प्रथमांशवृद्धिक्षयानुसारेण च वृद्धिक्षयनिरूपणात् (अधि. १८) क्षयवर्णरूपेण तौ परिगणितौ। एते वृद्धिक्षयवर्णा गतानुगतिकपद्धतिमवलम्ब्य परस्परेण सामञ्जस्यशीलत्वेन विनिमयार्हा इति प्रकाशितम्।



# षष्ठ परिच्छेदः

## वर्णसामञ्जस्यम्

### ७०. परिच्छेदस्य विषयवस्तु

पच् : cook प्रभृतिषु सामञ्जस्यशीलशब्दयुगलेषु करणपार्थक्य-योगात् असामञ्जस्यशीलयोर्वर्णयोः प-क-योः परिवर्तनमन्यथा साधितम्। तत्र हि पच् इत्यत्र च-स्थाने जातस्य क-स्य प्रभावात् पोऽपि को जातः। सहचारिण इन्द्रावरुणशब्दस्य साहचर्याच्च अग्नावरुणशब्दे अग्नि इत्यत्र अग्ना इति भवतीत्याद्यपि उत्प्रेक्षितम्। मुनि+आ>मुनिना इत्यत्र नकारागमो गुणिन्+आ>गुणिना इति सादृश्यमहिम्ना भवतीत्यपि निरूपितम्।

अस्मिन् परिच्छेदे ईदृशपरिवर्तनविषये विचारं विहाय केवलं सामञ्जस्यवहानां वर्णयुगलानां मध्ये परिवर्तनविषये किमपि कथ्यते। के के वर्णाः कैः कैर्वर्णैः सह सामञ्जस्यं धारयन्तीति उदाहरणद्वारा प्रतिपादनं हि अस्य परिच्छेदस्य मुख्यमुद्देश्यम्। अतो विषयवस्तुदृष्ट्या परिच्छेदोऽयं पूर्वपरिच्छेदस्यानुवर्तनं भवति।

सामञ्जस्यफलं खलु वर्णपरिवर्तनम्। वर्णस्य आंशिकी वृद्धिः, आंशिकः क्षयः, वर्णान्तरोपस्थितिश्चेति वर्णपरिवर्तनेन यथायोगं भवन्तीति प्राक् शंसितमेव। क्वचिद्विपरीतप्रवृत्त्यनुसारेण वृद्धिस्थाने क्षये जाते, क्षयस्थाने वा वृद्धौ जातायां वर्णो मूलरूपं प्रतिपद्यते। तथा प्रथमविनि-मयानन्तरं पराङ्मुखगत्या विनिमयान्तरे उपस्थिते वर्णः पूर्वावस्थामधि-गच्छति। वृद्धिक्षयविनिमया एकस्यैव वस्तुनस्त्रिविधा भावा इति कुत्रचित्

कस्यचिद्वर्णस्य वृद्धिं विलोक्य अन्यत्रोदाहरणे तस्य वर्णस्य क्षयोऽपि स्यादित्याकलनीयम् । तथैव कुत्रचिद्वर्णक्षयोऽन्यत्र तद्वृद्धिमनुमापयितुं प्रभवति । एवं कुत्रचिदग्रमुखपरिवर्तनानुसारेण कस्यचिद्वर्णस्य स्थाने वर्णान्तरं दृष्ट्वा स्थानान्तरे तस्यैव वर्णान्तरस्य पराङ्मुखपरिवर्तनेन स्थानिवर्णरूपप्राप्तिः कल्पनीया । अनया दिशा कुत्रचित् पराङ्मुखपरिवर्तनेन लब्धो वर्णः पुनरग्रमुखपरिवर्तनमाश्रित्य पूर्वं स्वरूपमापद्यत इत्यनुमातुं शक्यम् ।

तस्मात् कुत्रचित् क-परिवर्तनं खो भवतीत्युच्यमाने तत्रान्यत्र वा ख-परिवर्तनं कोऽपि भवतीति स्वतो बोद्धव्यम् । तथा ख-परिवर्तनं कं कुत्रचिद्दृष्ट्वा क-स्थानेऽपि तत्रान्यत्र वा खो जायत इति कल्पनीयम् । एवमेकत्र दकारीभूतस्तकारः तत्रान्यत्र वा दकारस्य तकारत्वप्राप्तियोग्यतां प्रकाशयेत् ।

अतएव चित्रे परिवर्तनसूचिकायाः सर्वस्या अपि संयोजकरेखायाः एतदभिप्रायबोधको रैखिकसङ्केतो भवति— '←→' इति । अग्रे दीयमानेभ्य उदाहरणेभ्य एतत् स्पष्टीभविष्यति ।

## ७१. सामञ्जस्यसूची

प्रदत्ताः सावर्ण्य-सस्थानत्वा-न्तरङ्गत्वसूचीरेकत्र विन्यस्य ऊर्ध्वाधः-क्रम-वामदक्षिणक्रमव्यूहेनावस्थापितानां सर्वेषां वर्णानां तेनैव समन्वितक्रमेण तत्तत्सामञ्जस्यप्रकाशनाय साम्प्रतमेकं कोष्ठकं प्रस्तूयते ।

# कोष्ठकम्—११

## विविधसामञ्जस्यानि

| वर्णाः | समञ्जसवर्णाः | सामञ्जस्यप्रकाराः | | |
|---|---|---|---|---|
| | | सावर्ण्यम् | सस्थानत्वम् | अन्तरङ्गत्वम् |
| १ | २ | ३ | ४ | ५ |
| अ | ए, ओ, ऐ, औ | | " | |
| इ | ए, य | | " | |
| उ | ओ, व | | " | |

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| स्वरकेन्द्रम् | ऋ, लृ | | ”[1] | |
| ए | अ, इ ऐ | | ” | |
| ओ | अ, उ, औ | | ” | |
| ऐ | अ, ए | | ” | |
| औ | अ, ओ | | ” | |
| ए,ऐ,ओ,औ | ऋ, लृ | | ” | |
| ऋ | स्वरकेन्द्रम् | | ” | |
| ऋ | र | | ” | |
| लृ | स्वरकेन्द्रम् | | ” | |
| लृ | ल | | ” | |
| अनुस्वारः | न, म | | ” | |
| विसर्गः | स | | | ” |
| ” | ह | | ” | |
| य | इ, ज | | ” | |
| व | उ, ब | | ” | |
| र | ऋ, ड | | ” | |
| र | ल, स | | | ” |
| ल | लृ, द | | ” | |
| ल | र | | | ” |
| श | स | | | ” |
| श | छ | | ” | |
| स | विसर्गः, र, श, ष | | | ” |
| स | थ | | ” | |
| ष | स, ख | | | ” |
| ष | ठ | | ” | |

१. स्वरसमूहः सर्वोच्चारणस्थानैः सम्बद्धः । मूर्ध्नो दन्तस्य च तदन्तर्गतत्वात् ऋ-लृ-भ्यां स्वरकेन्द्रस्य सस्थानत्वसम्बन्धः प्रकाशितः ।

| १ | २ | ३ | ४ | ५ | १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|---|---|---|---|---|
| ह | विसर्गः | | ” | | छ | थ | | | ” |
| क | ग, ख | ” | | | झ | घ | | | ” |
| क | च | | | ” | झ | ज, छ | ” | | |
| ग | क, ङ, घ | ” | | | भ | ध | | | ” |
| ग | ज | | | ” | त | च | | | ” |
| ङ | ग | ” | | | त | द, थ | ” | | |
| ङ | ञ | | | ” | त | ट | | | ” |
| ख | ष | | | ” | द | ल | | ” | |
| ख | क, घ | ” | | | द | ज | | | ” |
| ख | छ | | | ” | द | त, न, ध | ” | | |
| घ | ग, ख | ” | | | द | ड | | | ” |
| घ | झ | | | ” | न | अनुस्वारः, ञ | | ” | |
| च | क | | | ” | न | द | ” | | |
| च | ज, छ | ” | | | न | ण | | | ” |
| च | त | | | ” | थ | स | | ” | |
| ज | य | | ” | | थ | छ, ठ | | | ” |
| ज | ग | | | ” | थ | त, ध | ” | | |
| ज | ञ, झ | ” | | | थ | ठ | | | ” |
| ज | द | | | ” | ध | झ, ढ | | | ” |
| ञ | ङ | | | ” | ध | द, थ | ” | | |
| ञ | ज | ” | | | ध | ढ | | | ” |
| ञ | न | | | ” | ट | त | | | ” |
| छ | श | | ” | | ट | ड, ठ | ” | | |
| छ | ख | | | ” | ड | द | | | ” |
| छ | झ | ” | | | ड | ट, ण, ढ | ” | | |

| १ | २ | ३ | ४ | ५ | १ | २ | २ | ४ | ५ |
|---|---|---|---|---|---|---|---|---|---|
| ण | न | | | ,, | प | ब, फ | ,, | | |
| ण | ड | ,, | | | ब | व | | ,, | |
| ठ | ष | | ,, | | ब | प, म, भ | ,, | | |
| ठ | थ | | | ,, | म | अनुस्वारः | | ,, | |
| ठ | ट, ढ | ,, | | | म | ब | ,, | | |
| ढ | घ | | | ,, | फ | प, भ | ,, | | |
| ढ | ड, ठ | ,, | | | भ | ब, फ | ,, | | |

## ७२. सामञ्जस्योदाहरणानि

एतत्कोष्ठकक्रमानुसारेण तत्तद्वर्णयुगलगतसामञ्जस्याज्जायमानानां परिवर्तनानामुदाहरणप्रदानावसरे आरोहा वामभागे, अवरोहाश्च दक्षिण-भागे निवेश्यन्ते । आरोहावरोहकल्पनार्थं वर्णचित्रक्रम आधृतः । एतत्क्रमस्थस्य कस्यचित् पूर्ववर्णस्य कस्यापि परवर्णस्य रूपेण परिवर्तनमारोहः एतद्वैपरीत्येन कस्यापि परवर्णस्य पूर्ववर्णरूपेण परिवर्तनमवरोहः इति अत्र व्यपदिष्टम् । प्रथमत ऊर्ध्वाधोभावेनावस्थितिं द्वितीयतश्च वामदक्षिण-भावेनावस्थितिमाधारीकृत्य पूर्वपरत्वं निश्चेतव्यम् । यथा—ऊर्ध्वाधः-क्रमदृष्ट्या अ-ए इति आरोहः, ए-अ इति चावरोहः । वामदक्षिणदृष्ट्या ए-ऐ इत्यारोहः, ऐ-ए इति चावरोहः । एवम् अ-ए इत्यनन्तरमेव ए-अ-विषये चर्चा क्रियते, अ-ए इत्यस्य हि वामस्थत्वेन प्राथम्यम्, ए-अ-इत्यस्य च दक्षिणस्थत्वेन तत्परवर्तित्वम् । परिवर्त्यमानशब्दाः प्राचीननवीनभाषा-क्रमेण सज्जिताः । यथा—प्रथमतो वैदिकभाषा, ततः संस्कृतम् इत्यादि ।

पूर्ववर्णस्य परवर्णरूपेण परिवर्तनस्योदाहरणप्रदानानन्तरं सहैव परवर्णस्य पूर्ववर्णरूपेण परिवर्तनप्रदर्शनं विहितमिति पृथक्तया तन्नोदा-ह्रियते । उदाहरणम्— अ>ए, ए>अ इत्युभयमपि वर्णपरिवर्तन-प्रदर्शनमत्र कामितम् । तत्र प्राक्चर्चितदिशा अ-ए इति प्रथमतः उदाहृतम् ।

तत्र च वामभागे आरोहप्रदर्शनसमकालम् दक्षिणभागे अवरोहा अपि प्रदर्शिताः । अतः सूचीक्रमेण यदा ए-अ इत्यस्योदाहरणप्रदानावकाश आगतः, तदा पुनरुक्तिभिया उदाहरणानि न प्रदत्तानि । अतः ए-अ इत्यादीनामुदाहरणेऽन्वेष्टव्ये अ-ए इत्यादावेवान्वेष्टव्यम् । उदाह्रियमाणेषु परिवर्तनेषु केषाञ्चिदारोहाः, केषाञ्चिदवरोहाः, केषाञ्चिच्चोभये नैव विलोक्यन्ते । किञ्च केषाञ्चिदुदाहरणानि प्रचुराणि, केषाञ्चिच्चाल्पानि भवन्ति । केषाञ्चित् साक्षात्परिवर्तनोदाहरणाभावेऽपि परोक्षपरिवर्तनानि दृश्यन्ते । एतानि क्रमशः स्पष्टीभविष्यन्ति । उदाहरणप्रदर्शनावसरे केषाञ्चित् परिवर्तनानां विषये स्वतन्त्रा विचारा विहिताः, यत्र तत्र च आप्रोक्त्य उद्धृताः । तानि स्थलानि खलु विसर्ग-स, ष-ख, ष-ठ, क-च, ग-ङ, ग-ज, ख-घ, ख-छ, घ-झ, श-च इति । अथ क्रमश उदाहरणानि ।

## १. अ-ए

अत्र ए-ओ इत्यनयोर्विषये विविच्यमाने तयोर्ह्रस्वत्वं च गृहीतम् । दीर्घत्वमनयोर्निर्विवादम् । संस्कृतेतरासु प्राकृततद्भवभाषासु, कासुचित् सामवेदशाखासु[२] च एतयोर्ह्रस्वत्वं स्वीकृतम् ।

| | |
|---|---|
| पत्—पेतुः | es,e(ग्री.)—a (लै. केवलं प्रथमायाम्) |
| लभ्—लेभे | Maest (प्रा. इ.)—Mast |
| अस्—एधि | अन्धेरा (हि.)—अन्धार (ओ.) |
| नर—नरेषु | चरणेर (बे.)—चरणर (ओ.) |
| दा—देय | नेबा (ओ.)—नबा (ओ.) |
| मातृका—मेत्तिका (पालि) | देबा (,, )—दबा ( ,, ) |
| हसति—हसेदि (शौ. प्रा.) | हेबा (,, )—हबा ( ,, ) |
| अत्र—एत्थ (म. प्रा.) | केउँ ( ,, )—कउँ ( ,, ) |
| उत्कर—उक्केर (म. प्रा.) | |

२. छन्दोगानां सात्यमुग्रिराणायनीया ह्रस्वानि पठन्ति । —प्रा.शि. (६।९)

मास— mensis (ले.)

लघु— levis (,, )

सामि— semi ( ,, )

दक्ष (तर)— dexter (ले.)

अद्— essen (ज.)

अस्ति— esti (लि.)

स्फाय— speti (,,)

न — nay (स्का.)

उपरि— over

सप्तन्— seven

दशन्— ten

शत— cent

ऊधस्— udder

चतुष्पद— quadruped

पत्त्र— feather

अन्त— end

-तर— -ter

वल्ली— बेली (हि.)

कदली— केला (,, )

शय्या— शेज (ओ.)

व्यवसाय— बेउसा (ओ)

षरह - सेरह (ग्रा. ओ.)

a (ग्री.) - em (ले. पुलिङ्गे स्त्रीलिङ्गे वा कर्मकारकैकवचने).

ay (स्का.)— a (प्रा. इ.)

हल (बे.)—हेला (ओ.)

गबा (ओ.) - गेबा (ग्रा. ओ.)

**अ-ओ**

द्वा (वै.)—two (लिपिरूपम्)
परावर— परोवरीय
अन्यान्य— अन्योन्य
सह्— सोढ
वच्—अवोचत्
न — नो
वम् — vomere (लै.)
अर्घ — ordo ( ,, )
वच् — vox ( ,, )
मातृ — mote (लि.)
वसु — बोहू (जे.)
मङ्क्षु — मोसु ( ,, )
धामसु — दामोहु ( ,, )
अग्नि — ognos (स्का.)
वदर — बोर (म. प्रा.)
कथ् — quoth (प्रा. इ.)
गा — go
द्वार — door
धा — do
भ्रातृ — brother
अङ्गार — coal
ज्ञा — know
नासा— nose
thah (स्का.)—though
hal (प्रा. इ.)—whole
वधू — बोहू (ग्रो.)
गो—गाम्
प्रकोष्ठ—पओट्ठ (म. प्रा.)
गोधूम— गहम (ग्रो.)
कोमल—कग्रँल (ग्रो.)
डोम (हि.)— डम्व (ग्रो.)

आर्द्र—ओदा ( ,, )
धवल — धोब ( ,, )
सर्षप—सोरिष ( ,, )
बाह्य — बोझ ( ,, )
वह् — बोह् ( ,, )
खन् — खोल् ( ,, )
वद् — बोल् ( ,, )
बल् (बे.) – बोल् ( ,, )

### ३. अ–ऐ

दशन् — taihun (ग.)
अश्व — aihwa ( ,, )
उपरि — उपैरि (जे.)
मध्य — मैध्य (,,)
अष्ट — eight
बलीवर्द — बैल (हि.)

Sveinn (प्रा. ना.)—Swan (प्रा.इ.)
meister (प्रा. इ. )—master
सैंकडा (हि.)—शतकडा (ओ.)
बैल ( ,, )— बलद ( ,, )
तैर ( ,, )—तर ( ,, )
कैलि (मै.) — कलि ( ,, )
हैल (बे.) —हल (बे.)

### ४. अ-औ

द्वा (वै.) — द्वौ
अष्ट — अष्टौ
मासम् — मौज्घम् (जे.)
शत — सौ (हि.)
काक —कौआ (,, )

गौरव — गारव (म. प्रा.)
नौका — नाआ (ओ.)
ought, aught—आट् (उच्चारणगत इ.)
चौबीस (हि.)—चबिश (ओ.)

### ५. इ–ए

विविथे — विवेथे
क्षीवति — क्षेवति
हरि — हरे
विद् — बेद

एव — io (प्रा. ज.)
वेदना — बिअणा (म. प्रा.)
वेतस — withy
एक — इक (प्रा. हि.)

मिह् — मेघ

नी — नेता

जि — जेष्यति

पएड — पेएड (म. प्रा.)

लिह्—leechon (ज.)

नीड, निषत् — nest

द्विदशत् — twenty

यदि + अपि = यद्यपि

दिव् — द्यूत

सीव् – स्यूत

बुध्यते — बोधति

साधु—साधो

पुरु—polu (ग्री.)

उभ—oba (स्ला.)

प्लु— flover (ज.)

कुप्—hoffe ( ,, )

क्रुध्—grote (,, )

देवर — दिअर (ग्रो.)

श्वेत —सिठा ( ,, )

देख (हि.)— दीख (हि.)

बेटा (,, )—बिटिया (,,)

देख् (ग्रो.)—दिश् (ग्रो.)

६. इ–य

ज्या — जिनाति

चातुर्य — चातुरी

प्याय् — पीन

व्यजन — वीजित

स्यन्द् — सिन्दूर

स्यन्द् — सिन्धु

यज् — इज्या

व्युत्पात — बित्पात (ग्रो.)

विलोक्य — बिलोकि ( ,, )

व्यध् — बिन्ध् ( ,, )

व्यति + इ — बित् ( ,, )

unity — यूनिटी (उच्चारणगता इ.)

७. उ—ओ

प्रद्यो—प्रद्यु

चित्रगो—चित्रगु

लोक—lucase (लै.)

रोम—रुम (ग्रो.)

लोण (म. प्रा.)—लुण (ग्रो.)

नोक (हि.)—नुकीला (हि.)

भोंक् (,, )—भुक् (ग्रो.)

युज्—joh (ज.)
तुण्ड—तोण्ड़ (म. प्रा.)
युग— yoke
पुरः— fore
भुज— bow
भ्रू— brow
पुष्करिणी—पोखरी (ओ.)
उड्रीया— ओडिआ (,,)
लुठ् — लोट् (,,)
ठुड्डो (हि.) — थोड़ि (,,)
सोना(हि.)—सुना (ओ.)
तोमार (बे.)—तुमर (,,)

## ८. उ—व

अनु+अय — अन्वय
उखति — वखति
उङ्खति — वङ्खति
उद — water
विद्वस्—विदुषः
श्वन् — शुनी
दिव् —द्यूत
पर वत् (सर)— परुत्
वह् — ऊढ
वप्— उप्त
वश् — उशती
वच् — उक्त
नवतन (असि.) — नूतन
अव — ut (ले.)
वार— urina (ले.)
त्वरित— तुरिअ (म. प्रा.)

## ९. समानस्वरः—ऋ

### (क) अ-ऋ

ह्वर (वे.)—अपरिह्वृत (वे.)
अर्च् (,,)- आनृचुः (,,)
दृश्—ददर्श
स्तृ—शार

| | |
|---|---|
| अर्ह् (वे.)—आनृहुः (वे.) | सृ— saline (ले.) |
| स्पर्ध् (,,)—अपस्पृधेताम् (वे.) | ऋ — aro ( ,, ) |
| अर्च — ऋच् | वृ— waryan (ग.) |
| सर्जन—सृजन (ग्रो.) | तृष्—thars ( ,,) |
| | ऋष्टिः — अर्स्टिस् (जे.) |
| | नृकृतम्— नरकतं (पालि) |
| | तृण — तण (म. प्रा.) |
| | वृक्ष — वच्छ ( ,, ) |
| | ऋ — ar (प्रा. इ.) |
| | वृत् — ward |
| | मृत — मम्र (ग्रो.) |
| | कृष्ण — कह्ना (ग्रो.) |
| | नृत्य — नाच ( ,, ) |

## (ख) इ-ऋ

| | |
|---|---|
| आरोहे नोदाहरणमुपलभ्यते | कृ— किरण |
| | तृ — तितीर्षा |
| | शृ — शीर्ण |
| | जृ — जीर्ण |
| | ऋ— इर् (जे., लि.) |
| | वृक— vilkas (लि.) |
| | ऋणम्—इणं (पालि) |
| | ऋषि — इसि (म. प्रा.) |
| | दृष्टिः — दिट्ठी (म. प्रा.) |
| | वृ — will |
| | कृ— किया (हि.) |
| | शृङ्गार—सिंगार (हि.) |
| | तृण— तिनका ( ,, ) |

घृत — घिअ (ओ.)
तृण— तिरण ( „ )
अमृत—अमीय ( „)
शृङ्ग — सिङ्ग („)

(ग) उ-ऋ

आरोहे नोदाहरणमुपलभ्यते

तृ (वै.)— तनुरि (वै.)
गॄ („ )— जगुरि (, )
स्तृ („ )— सूर्त ( „ )
पॄ — पूर्ण
शॄ — शूर
घृणि— घुणि
मृज्— mulgere (लै.)
मृश्— mulceo ( „ )
वृष्टि— वुट्ठि (पालि)
कृ— कुणइ (म. प्रा.)
ऋतुः — उदू ( „ )
पॄ — full
वृद्ध— बुढा (ओ.)
पृच्छा—बुच्छा ( „ )

१०. समानस्वरः - ऌ

कृप— क्लृप्त
वृक— vluku (स्ला )

क्लृप्—कल्पना

११. ए - ऐ

देवता— दैवत
वेद— वैदिक
एतद्— ऐषमः

रै (<रयि) (वै.)
हैं— हे
वैमानिकः— बेमानिको (पालि)

केवल — कैवल्य
मेनका — मैनाक
एकः — oikos (ग्री.)
एनम् — oinos (ले.)
,, — ains (ग.)
एव — aiv (,, )
एध् — eith (प्रा. उ. ज.)
एतद् — aid (आर्मे.)
ऐरावतः — एरावणो (म. प्रा.)
कैतव — केढव ( ,, )
तैल — तेल (प्रो.)
ei (ग्री.) — e (ले.)
भैल (मै.) — हेला (प्रो.)

## १२. ओ - औ

गोतम — गौतम
चोर — चौर
सोम — सौम्य
गो — गौः
रोहिणी — रौहिणेय
ओजस् — aukan (ग.)
ओज्मन् — augmu (लि.)
ओष्ठ — austa (प्रा. प्रास्सि.)
होरा — hour (लिपिगता इ.)
बिम्बौष्ठ — बिम्बोष्ठ
पौरः — पोरो (पालि)
यौवन — जोव्वण (म. प्रा.)
लौह — लोहा (हि.)
सौभाग्य — सोहाग (हि.)

## १३. ए-ओ-ऐ-औ

अकार इकारेण मिलितः एकार ऐकारश्च भवति, उकारेण मिलित ओकार औकारश्च भवति। तस्मात् कस्यचिद्वर्णस्य अ-इ-उ-भिः सम्बन्धे प्रकाशिते स्वतः ए-ओ-ऐ-औ-भिस्तस्य सम्बन्धः प्रकाशते। अतः ऋ-लृवर्णयोरपि अ-इ-उ-भिः प्रकाशितः सम्बन्धः स्वतः ए-ओ ऐ-औ-भिः प्रतिपाद्यते। तत्र लृवर्णस्य व्यवहारक्षेत्रवैरल्यात् ए-ओ-ऐ-औ-रूपेण परिवर्तनं न दृश्यते। शिष्टः ऋकारोऽपि आरोहे न दृश्यते। अतः केवल-मवरोहोदाहरणानि प्रदीयन्ते।

(क) ऋ-ए

भृ — fero (लै.)

सृ — serpere (लै.)

हृ — zerren (ज.)

द्युपितृ — jupiter

भ्रातृ — brother

मातृ — mother

(ख) ऋ—ओ

ददर्श — dedorka (ग्री.)

मृदु — mo'lis (लै.)

ऋ — ortor (,, )

तृण — thorn

शृङ्ग — horn

वृक — wolf

(ग) ऋ—ऐ

तृ — thairh (ग.)

वृ — weir

(घ) ऋ-औ

तृण — thaurnus (ग.)

मृत्यु — मौत (हि.)

१४. ऋ - र

| | |
|---|---|
| धृजति — ध्रजति | भ्रुकुटी — भृकुटी |
| दृश् — द्रष्टा | त्रिफला — तृफला |
| कृ — क्रियते | क्रिमि — कृमि |
| बृह् — ब्रह्म | व्रश्च् — वृश्चिक |
| कृशः — क्रशीयान | प्रथ् — पृथु |
| दृढः — द्रढिमा | क्रप् — कृपा |

पितृ+आज्ञा — पित्राज्ञा
मृदु — bradus (ग्री.)
मृ — brotas ( ,, )
वृक्ष — रुक्ख (म. प्रा.)
ऋक्ष—रिच्छ ( ,, )
वृन्द — ब्रन्द ( ,, )
गृध् — greed
ऋत — rite
ऋण — रिण (ग्रो.)

प्रच्छ् — पृच्छा
भ्रम् — भृमि
भ्रस्ज् — भृज्जति
श्रा — शृत
श्रु — शृणोति

## १५. ऌ - ल

लृ+आकृति — लाकृति　　अत्रावरोहोदाहरणं न दृश्यते ।

## १६. विसर्गः - स

विसर्गस्य सेन रेण वा सामञ्जस्याभिधानकाले Monier-Williams-कृतविवेचना प्रणिधानमर्हति । विसर्गो हात् किञ्चिन्न्यून इति तथ्यं प्रकाश्य स वक्ति यत् , परिस्थितिविशेषेषु सात् रात् वा व्यञ्जनांशे ह्रासं प्राप्ते तौ विसर्गौ भवतः । तस्मात् les-प्रभृतिषु फ्रेञ्चशब्देषु isle-viscount प्रभृतिषु इङ्गिलश्शब्देषु च वर्तमानः S विसर्गरूपेणोच्चार्यते । तथा bar-tar-प्रभृतिषु इङ्गिलश्शब्देषु alter-प्रभृतिषु फ्रेञ्चशब्देषु च यथा र उच्चार्यते, तदनुसारेण संस्कृतलिपौ विसर्गलेख एव समुचितः स्यात्[३] ।

---

३. विसर्ग is less than ह् and is, in fact, no consonant, but only a symble for स् and र्. Whenever the usual consonantal sound of these letters is deadened at the end of a sentence or through the influence of क् , प् or a sibilant commencing the next word, ......Franch 'les' and English 'isle' 'viscount' in all which cases it might be expressed by विसर्ग, thus लेः etc. . So, again in French infinitives, such as 'aller', the final

श-ष-सा-नां साम्यम्,स-ध्वनिरूपेण व्यपदेशः, तेषामेकस्य प्रसङ्गेऽन्यतमस्याप्युपस्थितिश्च वर्णितानि (अधि. ६१)। एतानि साम्प्रतं दीयमानेषु स-ध्वन्युदाहरणेषु द्रष्टव्यानि ।

आः+तत्र — आस्तत्र
आः+चन्द्रः — आश्चन्द्रः
आः+टङ्कारः — आष्टङ्कारः

अधस् — अधः
भोस् — भोः
श्वस् — श्वः
राम सु — रामः
दुस् — दुः
बहिस् — बहिः
धनुष् — धनुः
सर्पिष् — सर्पिः
हविष् —हविः

## १७. विसर्गः - ह

श्वः — सुबह (हि.)
आः — आहा (भो.)

अहो — ओः

## १८. अनुस्वारः - न

मांस — मान्स्याम्
„ — mensa (प्रास्सि.)
अंस — अन्स (म प्रा.)

महान्+इन्द्रः (वै.)—महां इन्द्रः (वै.)
(तैत्तिरीयशाखायाम्)
तान्+तान् — तांस्तान्
यशान् सि (असि.)—यशांसि
जायन्ते - जाअंति (म. प्रा.)

---

'r' is silent; and in many English words such as 'bar', 'tar', the sound of 'r' is very indistinct and these also might be written in Sanskrit with विसर्ग अल्लेः, बाः & c. —A Practical Grammar of the Sanskrit Language (Chap. 1, P. 7)

कमलानि — कमलाइं (म. प्रा.)
गन्ध — गंध (हि.)
बन्धन — बंधन (ग्रो.)

## १६. अनुस्वारः - म

बंचणीअ (म.प्रा.)—बम्चणीअ (म.प्रा.)
देवम् + वन्दे—देवं वन्दे
बालम्—बालं (म.प्रा.)

## २०. य - ज

गोजाः (वे.)—गोयाः (वे., यजुर्वेदोच्चारणगतः[४])
वाजस्य(„)—वायस्य ( „ )
जुङ्क्ति — युङ्क्ति
जोतते — योतते
जनः — yenos (ग्री)
दुर्जनः — दुय्यणो (मा. प्रा.)
Jung (ज.) — young
gifan (प्रा.इ.)—yifan,[५]yive (म.इ.)
यातृ — janitrices (ले.)
यज्ञ — जस्न (जे.)
तृतीय — thridja (ग.)
युज् — joh (ज.)
यव — Javal (लि.)
युगम् — जुगं (म. प्रा.)
गम्यते — गमिज्जइ ( „ )
यादृश — जैसा (हि.)
या — जा (बे.)
यत्क्षण — जखन (बे.)
यामल—जाम्रांला (ग्रो.)

## २१. व—ब

वृद्धः — बुड्ढो(म.प्रा.)
वाल— बाल (हि.)
वह् – बह् ( „ )
वल् — valour (ले.)
वाष्प— vapour
diabulus (ग्री.)—devil
nebula (ले.)—niwl (वे.)
b (ज.)—v[५]

---

४. स्वरात् स्वरे परे समानपदे जो यं न तु ऋकारे —शु.य.प्रा. (४।१६४)

५. . The making of English ( Chap. 3, foot note P. 57 )

वेतस — बेंत (हि.)

वसन — बसन (बे.)

विनय — बिनय (ग्रो.)

अवज्ञा — अबज्ञा ( „ )

पावक — पाबक ( „ )

भाव — भाब ( „ )

## २२. र-ल

रेह्मि (वै.) — लेह्मि

रराट ( „ )— ललाट

राक्षा — लाक्षा

पर्यङ्क — पल्यङ्क

परा+अयते — पलायते

दीर्घ — delikhus (ग्री.)

गौर — gilvus (लै.)

ग्रथ् — gluten ( „ )

पर्शु — falx ( „ )

प्रा — plenus ( „ )

रिच् — licet ( „ )

रुच् — lux ( „ )

पुरु — filu (गा.)

पर्य्यस्त — पल्लत्थ (म. प्रा.)

राजा — लाआ (मा.प्रा.)

रुधिर — लुहिल ( „ )

ग्रीवा — golova (रा.)

रुच् — light

ऊर्णा — wool

क्लन्दति — क्रन्दति

श्लुङ्गति — श्रङ्गति

श्लुङ्कति — श्रङ्कति

लङ्खति — रङ्खति

लङ्घति — रङ्घति

लखति — रखति

लगति — रगति

लाघति — राघति

लिङ्गति — रिङ्गति

लोम — रोम

लोहित — रोहित

लवणवान् — रुमण्वान्

ज्वल — ज्वर

कपोल — capere (लै.)

लिख् — rekti (लि)

बाल — बारा (प्रा. हि.)

लुञ्चामि — runchare (लै.)

श्रि — lean
गर्भ — calf
टर् (हि.) — टल् (ओ.)
झर् (ओ.)—झाल( „ )

## २३. र–स

पुनर्+तत्र — पुनस्तत्र
दुर्मनस् — dusmenos (ग्री.)
(vir-) lieren (-ज.) — lose
तमस् — तिमिर
हरिस्+गच्छति — हरिर्गच्छति
तमस् — temere (लै.)
ऊषस् — aurora ( „ )
ओजस् — augur („ )
क्षप्—crepus(-culum)(„ )
क्षम्— hramza (ग.)
अस्— are
शश — hare
वत्स — wether
ऊधस् — udder
genesis (लै.)— generis (लै.)
ceas (प्रा. इ.)—curron (प्रा.इ.)

## २४. र–ड

लहरी — लहडि (ओ.)
बार — बाड ( „ )
सारी (हि.)— शाडी (ओ.)
झर (हि ) — झड़ (ओ.)
पुरी („ ) — पुड़ी (बे.)
गुड — gur
थोडा (ब्रज)— थोरा (ब्रज)
बडा (ओ.)—बरा (ओ.)
शतकडा (ओ.)—शतकरा (ओ.)

## २५. ल–द

आरोहोदाहरणं नोपलभ्यते
मर्द — मल्ल
तद्+लय — तल्लय

मृदु — mollis (लै.)
क्षुद्र — खुल्ल (म. प्रा.)
गादा(वरी)—गोला (म.प्रा.)
नुर्दति — णोल्लइ ( ,, )
मृद् — मलइ ( ,, )
पद् — पालेइ ( ,, )
वैदूर्य — बेलुरिम्र ( ,, )
दोहद — दोहल ( ,, )
प्रदीप्त — पलित्त ( ,, )
कदम्ब — कलम्ब ( ,, )
तदा — ताला (म. प्रा.)
छदि — चाल ( ग्रो. )
छिद् — छेल् ( ,, )
छाद् — चाल ( ,, )
भद्र — भल ( ,, )
वद् — बोल ( ,, )
गद (म.प्रा.)—गला ( ,, )

## २६. श-स

शस्य — सस्य
शर्व — सर्व
नश् — nocere (लै.)
पशु — falx (लै.)
पश् — pas (ज.)
शतम् — सतमं (जे.)
दर्शन — दंसण (म. प्रा.)
दश — दस (हि.)

स्रङ्कृति — श्रङ्कृति
सीलते — शीलते
सर्वति — शर्वति
स्मीलति — श्मीलति
भूमि+सु — बूमिशु (जे.)
संचित — शंचित (मा. प्रा.)

शिरस् — सिर (हि.)
स्पर्श — परस (बे.)
वेशवार — बेसर (ओ.)

## २७. श-छ

प्रच्छ् — प्रश्न
विच्छ् — विश्न
म्लेच्छ् — म्लिष्ट
प्रच्छ् — पृष्ट
,, — preces (लै.)
छिद् — scindo (,, )
छद् — scatus (ग.)
वाञ्छ् — wish
छदि — shut
,, — shade

सन्+शम्भुः — सञ्छम्भुः
इष् — इच्छा
सप्तपर्ण — छत्तिवण्ण (म. प्रा.)
श्मश्रु — मूँछ (हि.)
शण — छण (ओ.)
शावक — छुआ ( ,, )
शौच — छश्च् ( ,, )
सञ्चय — छञ्चिबा ( ,, )
सक्तुक — छतुआ ( ,, )
षट् — छअ ( ,, )

## २८. स-ष

ष्वष्कते — वस्कते
दक्ष (तर) — dexter (लै.)
मुष्क — musculus (,, )
रक्ष — arx (,, )
इषवः — इसवो (जे.)
एषः — एसो (म. प्रा.)
अष्टन् — osmaz (स्ला.)
पक्ष — flax (प्रा. इ.)
मूष — mouse
षोड़श — सोलह (हि.)
एषो (बे.)— आस (ओ.)

आखुस्ते (वै.) — आखुष्टे (वै.)
अग्निसोमौ (असि.)—अग्नीषोमौ
गोस्थ ( ,, )—गोष्ठ
अस्थिवत् ( ,, )—अष्ठीवत्
वि+साद ( ,, )—विषाद
अजनिस्त ( ,, )—अजनिष्ट
अभि+सेक ( ,, )— अभिषेक
नदी+सु ( ,, )— नदीषु
(ष्ठा>) स्था — तिष्ठति

### २६. स-थ

hath (प्रा. इ.)— has

मास — month

दंश — tooth

### ३०. ष-ख

पाषण्ड — पाखण्ड

षण्ड — खण्ड

अष्ट — acht (ज.)

विश्— wich (,, )

विष — bikh

झष — झख (हि.)

भाषा — भाखा (व्र.)

वर्षा — बरखा (,, )

घोष — घोख ( ,, )

शुष् — शुख् (ओ.)

दृश् — देख् (,,)

षाडङ्ग—खाडङ्गा (,,)

परिखेवते — परिषेवते

केशवरामकृतायाः पद्यात्मकशिक्षाया अवगम्यते यत्, टवर्गेण ककारेण वा संयुक्तः षः ष ·इत्युच्चार्यते, अन्यत्र तु खो भवति[६]। अस्य नियमस्यांशिकं विरोधं कुर्वन्तो प्रातिशाख्यप्रदीपशिक्षा क-युक्तः षः खो भवत्येवेत्यनुशास्ति[७]। ओडिआ-बेङ्गालीभाषयोः क्षयोच्चारणमेतत्पद्धति-

---

६. असंयुक्तस्य मूर्धन्योष्मणः खोच्चारणं मतम्।
टुमृते संयुक्तस्यापि कस्य योगे ष एव हि ॥ (१४)

७. क्षकारे षकारवत् अवयवसम्भावनेऽपि मातृकादौ गणनात् एकवर्णत्वात् अवयवविभागाभावेन खकारोच्चारणं भवति। ककारयोगे खकारोच्चारणाभाव इति नियमस्तु न, शुष्कमित्यादौ विपरीतसंयोगे ककारयोगेऽपि खकारोच्चारणं भवति। (पृ. २९९)

मनुसरति । हिन्दीभाषायां तु क्षः क्ष इत्युच्चार्यमाणः केशवराममत-मनुगच्छति ।

प्राचीनग्रीक्-संस्कृतभाषावर्जं सर्वत्र प्राचोनभाषासु वर्ग्यमहाप्राण-वर्णस्थाने श-ष-सा इतरसंघर्षिवर्णा वा भवन्तीति Otto Jespersen प्रकाशयति[८] ।

## ३१. ष-ठ

अस्य परिवर्तनस्य प्रत्यक्षोदाहरणं विरलम् । अस्य कारणं खलु-मूर्धन्यवर्णोच्चारणमितरापेक्षया कठिनम् । मूर्धन्येष्वपि ष-ठ-ढा-नामुच्चारणं क्रमशो दुष्करम् । एभिर्वर्णैः संयुक्तवर्णघटने तु सा कठिनता क्रमशोऽधिकं वर्धते । अस्मादेव कारणात् ठ-स्य ढ-स्य वा संयोगेन सृष्टेषु संयुक्तवर्णेषु ट्ठ-ण्ठ-ष्ठ-ड्ढ-ण्ढ-इति पञ्चैव व्यवह्रियन्ते । स च व्यवहारः कासुचिदेव भाषासु न सर्वासु । तत्रापि वैरल्येनैव ।

अस्य आरोहोदाहरणं नोपलभ्यते　　रूठ (हि) — रुष् (ग्रो.)

## ३२. क-ग

| | |
|---|---|
| कवते—गवते | श्रङ्गति—श्रङ्कति |
| अकति—अगति | श्लङ्गति—श्लङ्कति |
| कूर्दते—गूर्दते | वाग्+तस्य — वाक्तस्य |
| केवते—गेवते | गगन—गकण (पै. प्रा.) |
| वाक्+देवी — वाग्देवी | उग्र — auko (ग.) |
| क्रन्द् — greta (ग.) | गर्ज् — crago (प्रा. ज.) |
| क्रुध् — groll (ज.) | गल् — quall ( ,, ) |

८. Note also that true aspirates are found in early Greek and Sanskrit. In the other branches and in Later Greek also these changed to spirants or fricatives fairly early.

—Growth and Structure of the English Language

(Sect. 121, P. 154)

शक — hag (ज.)
काक — काग (हि.)
शाक — शाग (ग्रो.)
वक — बग ( ,, )
पाक — पाग ( ,, )
भेक — बेङ्ग ( ,, )

स्थग् — decken (ज.)
नग्न — nacked
(आ) गम् — come
गर्भ — calf
गौः — cow
अङ्गार — coal
स्थग् — ढाङ्क्
rego (लै.) — rexi (लै.)
Fagus(,,) — bok (प्रा. स्ला.)
ager (,,) — acre
gani (वे.) — kin
ठग (हि.) — ठक (ग्रो.)

## ३३. क-ख

कवते — खवते
कर्वति — खर्वति
कोजति — खोजति
केलति — खेलति
प्राङ्क्षष्ठ: — प्राङ्खष्ठ:
कर्पर — खर्पर
श्वक्ष — श्वख्श (जे.)
नक्तम्— नेख्तुरु ( ,, )
कविष् — ख्रविश्यन्त ( ,, )
शिषक्ति — हिशख्ति ( ,, )
कुब्ज — खुज्ज (म. प्रा.)

खूर्दते — कूर्दते
खर्जति — कर्जति
खन् — canalis (लै.)
ख्या— in-quam (,,)
कख — cackle ( ,,)
choo (प्रा. ज.)— kuh (ज.)
jock — jeec (प्रा. इ.)
खट्वा — cut
खन्धो (म. प्रा.) — कान्ध (ग्रो.)
भूख (हि.) — भोक ( ,, )
भद्रख (ग्रो.) — भद्रक ( ,, )

## ३४. क-च

कर्टति — चर्टति

लोचन — लोकन

केलति — चेलति
कृ — चकार
किरात — चिलाद (म. प्रा.)
,, — चिरेइता (ग्रो.)
कृष् — चाष (,,)

पच् — पाक
वाच् — वाक्
चक्र — kakros (ग्री.)
मुच् — mukos (,,)
पञ्चन् — quinque (ले.)
सच् — sequon (,,)
कच् — kinkan (लि.)
पश्च — paskui (,,)
पच् — peka (स्ला.)
stitch — stick
बेच (हि.) — बिक (हि.)
चाचा(,,) — कका (ग्रो.)

कतिपयपाश्चात्यभाषासु क-च-योः सामञ्जस्यविषयका विचारा अत्र परिशीलनीयाः। ते खलु—

(क) उदीच्यफ्रेन्च्भाषायां यत्र क उच्चार्यते, तत्र केन्द्रीयफ्रेन्च्भाषायां चः उच्चार्यत इति Henry Bradlay[९]।

(ख) च-कौ एकस्यैव वर्णस्य द्वे रूपे; चः कोमलः, कश्च कठोर इति Monier Williams.[१०]

(ग) ache शब्दस्य द्विविधोच्चारणात् च-क-योः सामञ्जस्यमवगम्यते। अयं शब्दो विशेष्यश्चेत्तर्हि एच् इत्युदचार्यत, क्रिया चेत्तर्हि एक् इति

९. Northern French has क where Central French had च —The Making of English (Chap. 3, P. 58)

१०. If च is a modification or softening of क, just ज of ग, the organ of utterance being in the palate, a little in advance of the throat. —A Practical Grammar of The Sanskrit Language, (Chap. 1, P. 10)

उच्चारितः सन् brake-sake – प्रभृतिककारान्तशब्दैरन्त्यानुप्रासं रक्षतीति समीक्षका.[११] ।

(घ) येषां शब्दानामाद्यवर्णः h इति भवति, तेषाम् hey-ho-hauke-horse-husband-शब्दानामुच्चारणेन एच्=पीडा जायते - इति मनोहरोक्तिः Much Ado about Nothing नाटके[१२] वर्तते । एच्-शब्दे चकारोच्चारणस्य दृष्टान्तोऽयम् ।

## ३५. ग-ङ

| | |
|---|---|
| वाग्मय — वाङ्मय | ङवते — गवते |
| वाग्माधुरी — वाङ्माधुरी | |

आनुनासिक्यं विहाय ग-ज-ड-द-बा ङ-ञ-ण-न-मैः समाना इति प्रागुक्तम् (अधि. ५८) । एतादृशसाम्यादेव यत्र ज्योतिषनियमानुसारेण ङ-ञ-णाद्यं नाम कर्तव्यं, तत्र तादृशनाम्नोऽभावात् ग-ज-डाद्यं नाम कुर्वीतेति नरपतिजयचर्या[१३] ।

## ३६. ग-घ

| | |
|---|---|
| गृह् — अघोक् | घवते — गवते |
| उग्र — उघ्र (जे.) | घघ् घघ्सि (असि.) — जाघग्धि |

११. In the Shakespeare Folio of 1623, the noun is always spelt with ch and the verb with k; the verb rimes with brake and sake. —Growth and Structure of the English Language (Sect. 174, Chap. 8, P. 158)

१२. By my troth, I am exceeding ill, hey, ho, or a hanke, a horse or a husband ? For the letter that begins them all, H. —Much Ado about Nothing. ( 3, 4, 46-48)

१३. न प्रोक्ता ङञणा वर्णानामादौ सन्ति ते नहि ।
चेद् भवन्ति तदा ज्ञेया गजडास्ते यथाक्रमम् ॥ (वर्णस्वरचक्रम्, पृ. ११)

नग्न — नक्न
भग — बघ (प्रा. पार्सि.)
गृह — घर (म. प्रा.)
गूथ — (गुह>) घुग्र (ग्रो.)
शृङ्गारी — सिङ्घारी ( „ )
bog (प्रा. इ.) — bough

धर्म — गरम (जे.)
जङ्घा — जङ्गा (जे.)
लघु — lungs
रङ्घ् — रेंग् (हि.)
घटन — गढण (ग्रो.)
सिङ्घाण — सिङ्गाणि ( „ )
घुंडी (हि.) — गुण्डि (गङ्गामी ग्रो.)
घाण्टिग्रा (ग्रो.) — गाण्ठिग्रा (ग्रो.)

## ३७. ग-ज

ग्मा (वै.) — ज्मा (वै.)
गम् गम् (ग्रसि.)—जङ्गम, जगत्
गद् गद् (ग्रसि.) — जगाद
गद् — zodas (लि.)
गोलाङ्गूल — गोलङ्गा (ग्रो.)
लाङ्गुड (ग्रो.) — लाङ्ग (,, )

विज् — वेग
भुज् — भोग
सृज् — सर्ग
सञ्ज् — सङ्ग
जुष् — gustus (लै.)
पज् — pango („ )
मज्जन् — मज्ग (जे.)
„ — mazgu (स्ला.)
गर्ज् — cargo (प्रा. ज.)
राजन् — rig (के.)
सञ्ज् — segn (लि.)
भुज् — bugan (प्रा. इ.)
विज् — vigorous
ज्ञाति — ग्यांति (ग्रो. उच्चारण)
Joch (ज.) — geoc (प्रा. इ.)
भाज् (ग्रो.) — भाङ्ग् (ग्रो.)

ग-ज-योः सामञ्जस्यविषये अधस्तनं विवेचनमवधानमर्हति :—

(क) (i) ग-जौ एकस्यैव वर्णस्य द्विविधौ विकासौ; प्रथमः कठोरः, द्वितीयस्तु कोमल इति Monier Williams[१४].

(ii) guide, give, garland इत्यादिषु g इत्यस्य ग इति कठोररूपेण उच्चारणं भवति, age, gin, orange इत्यादिषु तस्यैव ज इति कोमलरूपेणोच्चारणं भवति ।

(ख) उदीच्यफ्रेञ्च भाषाया गकारः केन्द्रीयफ्रेञ्च भाषायां जरूपेणोच्चार्यत इति Henry Bradlay[१५] ।

### ३८. ङ-ञ

ङुङुत (असि.) — ञुङुवे प्राञ्च् — प्राङ्

### ३९. ख-घ

| | |
|---|---|
| खवते — घवते | घघति — कखति |
| राखति — राघते | दीघः — delikhus (ग्री.) |
| nicht (ज.) — night (लेखगता इ.) | लघुः — elakhus ( ,, ) |
| | मेघः — मेखो (पै. प्रा.) |

पाश्चात्यभाषासु सम्पृक्तयोर्घोषाघोषमहाप्राणयोः परस्परविनिमयो बहुत्र दृश्यत इति Jespersen कथनमत्र द्रष्टव्यम्[१६] ।

### ४०. ख-छ

रुक्खो (म. प्रा.) — वच्छो (म प्रा.) सरिच्छ (म.प्रा.)—सरीखा (हि.)

---

१४. द्र. पा. टा. पृ २७३

१५. Northern french had ch, the central dialect changed it into G.- The Making of english (Chap. 3, P. 58)

१६. Note that in Sanskrit the voiced and the voiceless aspirates are kept distinct, whereas in other languages even though both varieties may be found (as the dentals in Gothic and English ) they are mixed a lot— Growth and Stmcture of the English Language (Sect. 121, P. 154)

| | |
|---|---|
| खम्म (प्रा. हि.) — छिन (प्रा. हि.) | कुच्छी (म. प्रा.)—कोख (हि.) |
| खाल (हि.) — छाल (ओ.) | अच्छी ( ,, )—आखि (ओ.) |
| मक्खी (,,) — माछि ( ,, ) | लच्छन (हि.) – लखन (हि.) |
| खाडि (ओ.)—छड ( ,, ) | छेत ( ,,)—खेत (ओ.) |
| | छार (ओ.)—खार ( ,, ) |

जर्मानीभाषायां Rouchen-Franchen-शब्दयोः ch समभावेन लिख्यमानोऽपि प्रथमे ख-रूपेण, द्वितीये च छस्तरमतिक्रम्य च-रूपेणोच्चार्यमाणः सन् ख-छयोर्मध्ये स्थितं सामञ्जस्यं सूचयतीति Daniel Jones निगदति[१७]। अत्र खन् खन्यते (असि.)—चङ्खन्यते इति तुलनीयम् ।

## ४१. घ-झ

अनयोः प्रत्यक्षपरिवर्त्तनेन निष्पन्नानि उदाहरणानि नैव दृश्यन्ते । यत एतद्वर्णद्वयघटिताः शब्दा विरलाः । यानि चोदाहरणान्युपलब्धानि स्युस्तेषु प्रत्यक्षपरिवर्त्तनस्तरम् (घ-स्थाने झ-स्तरं झ-स्थाने च घ-स्तरम्) अतिक्रम्य यथाक्रमं ज-गौ भवतः । यथा—घ्रा घ्रा(असि.)>झाघ्रा(असि.)>जघ्रौ; झझ् धातुः>झघ्धातुः(असि.)>झग्धातुः । इत्थं प्रत्यक्षपरिवर्तनोदाहरणे विरलेऽपि घ-झयोः स्पृष्टत्वघोषत्वमहाप्राणत्वदृष्ट्या सामञ्जस्यमस्त्येव । स्थलविशेषेषु गघटितनामा g(जि)वर्णो h-मिश्रितः सन् ghost-प्रभृतिशब्देषु यद् घ-रूपेणोच्चार्यते, तत्र घ-झयोः सामञ्जस्यमेव हेतुः ।

## ४२. च-ज

| | |
|---|---|
| वाच्+इन (वै.)—वाजिन (वै.) | जम्भ — chumb (ग.) |
| अच्+अन्त — अजन्त | राजा — राचा (पै. प्रा.) |
| चमति — जमति | व्रजति — बच्चइ (म. प्रा.) |
| चर्चति — जर्जति | भज् — beech |

---

१७. In Germany, ch has different value in rauchen and Franchen (phonetically rauxən, Franc,ən) —An Outline of English Phonetics ( sect. 33)

चपेट — जाबडा (ग्रा. ग्रो.)

सूची — सूजी (सम्ब. ग्रो.)

चक् चक् (ग्रो.)—जक् जक् (ग्रो.)

भ्राज् — bleach

जुष् — choose

राजन् — rich

भूर्ज — birch

जम्भ — chumb

कज्ज (म. प्रा.)—कच्च (पै. प्रा.)

## ४३. च-छ

पच्+शब्दः—पच्छ्शब्दः

चमति — छमति

किंचित् — किंछि

चतुष्क — छक

प्रच्छ् — forschen (ज.)

छुच्छुन्दरि — चुचुन्द्रा (ग्रो.)

छत्र — चाट ( ,, )

छदि — चाल ( ,, )

छद् — चदर ( ,, )

याउग्रछि (ग्रो.)— याउंच ( ,, )

पावच्छ ( ,, )—पाहाच ( ,, )

## ४४. च-त

चषति — तषति

चयते — तयते

च — te (ग्री.)

पञ्च — pente ( ,, )

पश्चात् — post

चाष (ग्रो.) — तास (ग्रा. ग्रो.)

तिन्तिडी —चिञ्चिडी

तिष्ठति — चिट्ठदि (म. प्रा.)

सत्य — सच (हि.)

नृत्य — नाच (,,)

तक्ष — चाञ्छ् (ग्रो.)

तज् — चद् ( ,, )

virtue— वर्च्यू (उच्चारणगता इ.)

जोत् (हि.)— योच् (ग्रो.)

पैंतालीस (हि.)—पञ्चचालिश (ग्रो.)

## ४५. ज-ञ

अस्य परिवर्त्तनोदाहरणं नोपलभ्यते; कासुचिद्भाषासु ञ-स्य अप्रयोगात्, तदन्यासु च विरलप्रयोगात्। तथापि इतरवर्गेष्विव चवर्गेऽपि

## ४६—ज-झ

तृतीयपञ्चमयोरानुनासिक्यप्रयुक्तं भेदं विहाय सर्वांशेषु यत्साम्यमस्ति, तदेवैतयोः सामञ्जस्यप्रदर्शने प्रयोजकम् ।

जटति — झटति
जमति — झमति
जर्जति —झर्झति
बुञ्ज — पञ्झा (ग्रो.)
झर्झति — जर्झति
साँझ (हि.) — सञ्ज (ग्रो.)
शुभ् (ग्रो.) — सुज् (ग्रो.)

## ४७—ज-द

जामाता — दामाद (हि.)
ज्येष्ठा (माता) – देठेइ (ग्रो.)
ज्येष्ठश्वशुरः — देठशुर ( „ )
जर्जर — ददरा
तर्ज् — चद (ग्रो.)
दम्पती — जम्पती
द्युत् — ज्योतिः
दृ — zerren (ज.)
द्वि — zwei ( „ )
द्विष् — zwist ( „ )
विद् — wizzen ( „ )
द्युपितृ — Jupiter
दद्रू — यादु (ग्रो.)
मुद्र — बुज ( „ )
वाद्य —बाजा ( „ )
Graduate—ग्राजुएट्(उच्चारणगता इ.

## ४८. ञ-न

अस्यारोहोदाहरणं नोपलब्धम् । वञ्चयति, लुञ्चति, वाञ्छति इत्यादौ दृश्यमानो ञ् न-स्य परिवर्तितं रूपमिति प्रौढमनोरमोद्धृता कारिका[१८] ।

सन्+शम्भुः>सञ्शम्भुः
राजन्>राज्ञः
याच्+ना>याच्ञा
धान्य>धाञ्ञ्य (पालि.)

---

१८. नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चे षाट्टवर्गस्तवर्गजः ॥ (संज्ञाप्रकरणम्, पृ. २२)

## ४९—छ-झ

छमति — झमति

छाया — झाईं (ब्र.)

छीन (अव.) — झीन (ओ.)

निर्झर — णिच्छर (पै. प्रा.)

झाङ्क् (ओ.)—छाङ्क् (ओ.)

झुण् (ओ.)—छाण (ओ.)

## ५०—छ-थ

गुच्छ — गुत्थी (हि.)

छिल (बे.)— थिला ओ.)

छत्र (ओ.) — थुम्प (ग्रा. ओ.)

रथ्या — रच्छा (म. प्रा.)

उत्थल — उछुल् (ओ.)

मिथ्या — मिछ ( ,, )

अस्थि — अछि ( ,, )

## ५१. झ घ

झटपट (ओ) —धडपड (ओ.)

ध्यानम् — झाणं (म. प्रा)

विन्ध्यः — बिञ्झो ( , )

धिक् — झिङ्गास (ओ.)

## ५२. त-द

अन्तति — अन्दति

जगत+अम्बा — जगदम्बा

तिज — dis-tinguo (लै.)

पितृ — fadar (ग.)

आत्मन् — cdem (ज.)

क्षेत्र — hei e (,,)

तर्ज — drohen ( ,,)

गतः — गदो (शौ. प्रा.)

अन्त — end

श्रुत — loud

तद् — तत्

द्विष्यत् — त्विष्यन्त् (जे.)

दश् — tahyan (ग.)

दह् — taht (प्रा. ज.)

दारु — trewo (ज.)

द्रुह् — trogan (,,)

दशन् — tasn (आर्मि.)

हृदय — हितअक (पै. प्रा.)

दशवदनः—दसबतनो (,, )

रद — rat

दृ — tear

द्वि — two

